तीर्णमेषोऽदत्तवर्ती अदत्तदण्डक्रियावानित्यर्थः ७ ॥८२६॥

अयं पुनर्वक्ष्यमाणो भवति आध्यात्मिको दण्डः, अध्यात्मं–मनस्तत्र भवो बाह्यनिमित्ता[1]नपेक्षः शोकोऽभिभव इति भावः । तमेवाह—'**नवि कोइ' गाहा**, यस्य सम्मुखं न कोऽपि किञ्चिदप्यनिष्टं जल्पति, तथापि हृदयेन–मनसा कृत्वा किञ्चिदतिशयेन दुर्मनाः–कालुष्यभाग्भवति तस्याध्यात्मिकी क्रिया '**सोसइ**' त्ति कथ्यते । तस्य चाध्यात्मिकक्रियास्थानस्य इमानि–वक्ष्यमाणानि चत्वारि '**स्थानानि**' कारणानि भवन्ति ।।८२७।।

तान्येवाह–'**कोहो**' इत्यादि गाथा पूर्वार्द्धम्, क्रोधो मानो माया लोभश्चेत्येतानि चत्वारि कारणा न्यध्यात्मक्रियायां भवन्तीति। बाह्यनिमित्तान[2]पेक्षमाभ्यन्तरनिष्कारणक्रोधादिसमुद्भूतं दौर्मनस्यमाध्यात्मिकक्रियेति तात्पर्यार्थः ८ ।

नवमं क्रियास्थानमाह–'**जो पुणे**' त्यादि, यः पुनर्जातिमदादिना–जाति-कुल-रूप बल श्रुत-तपोलाभैश्वर्यमदलक्षणेनाष्टविधेन मानेन मत्तः सन परम्-आत्मव्यतिरिक्तं हीलयति–जात्यादिभिर्निन्दति निकृष्टोऽयमित्यादिवचनैः परिभवत्यनेकाभिः कदर्थनाभिर्मानप्रत्यया एषा क्रियेति ९ ।

दशमं क्रियास्थानमाह–'**माइपिइ**' इत्यादि सपादा गाथा, यः पुनर्माता-पितृस्वजनादीनामल्पेऽप्यपराधे तीव्रं दण्डं कुरुते दहना-ऽङ्कन-बन्ध-ताडनादिकं तन्मित्रद्वेषवर्तिक्रियास्थानम्, अमित्रक्रियेत्यर्थः, भवेद्दशमं क्रियास्थानमिति । तत्र दहनम्–उल्मुकादिभिर्दम्भनम्, अङ्कनं–ललाटादिषु चिह्नकरणम्,

१ ०नपेद्त्य-जे.।· नापेक्ष्यं-सि· नापेक्षं-वि.॥ २ ०नपेक्ष्य० सि.॥

बन्धो–रज्ज्वादिभिर्नियन्त्रणम्, ताडनं–कशादिभिराहननम्, आदिशब्दादन्न-पाननिषेधादिपरिग्रहः १० ॥ ८२८-८३०॥

'एकादशमं क्रियास्थानमाह—'एगारे'त्यादि सार्द्धगाथा, एकादशमं माया–मायाक्रियास्थानम्, यथा हृदये–मनसि अन्यत्–वचःक्रियाविलक्षणम्, वाचि–वचसि अन्यत्–मनःक्रियाविलक्षणम्, अन्यच्च वाङ्मानसविसंवादि आचरति–करोति। कथम्भूतः सन्?–'गूढसामर्थ्यः' गूढे–गोपने सामर्थ्यं–शक्तिविशेषो यस्य स तथा, केन कृत्वा?–स्वकर्मणा' निजचेष्टितेनाकारेङ्गितादिना, मायाप्रत्यया एषा क्रियेति ११।

द्वादशं क्रियास्थानमाह–एत्तो' इत्यादि, इतः–ऊर्द्ध्वं पुनर्लोभप्रत्यया क्रिया इयं–वक्ष्यमाणा, यथा सावद्यारम्भाः–प्राण्युपमर्दादिना सपापव्यापारा ये परिग्रहा–धन-धान्यादिरूपास्तेषु महत्सु–गुरुषु सक्तो–गाढतराकाङ्क्षायुक्तः। तथा स्त्रीषु–युवतिषु कामेषु च–मनोज्ञरूप-रस गन्ध-स्पर्श-शब्दस्वरूपेषु गृद्धः–अत्यन्तमभिसक्तः। तथाऽऽत्मानमपायेभ्यो गाढादरेण रक्षन् अन्येषां सत्त्वानां–प्राणिनां वध-बन्धन-मारणानि–लगुडादिहनन-रज्ज्वादिसंयमन-प्राणव्यपरोपणलक्षणानि करोति एषा इह–सिद्धान्ते लोभप्रत्यया-लोभनिबन्धना क्रियेति १२॥

त्रयोदशं क्रियास्थानमाह–'इरियावहियमि'त्यादि, अतो लोभक्रियानन्तरमैर्यापथिकीं क्रियां प्रवक्ष्यामि। तत्र ईरणमीर्या–गमनं तद्विशिष्टः पन्था ईर्यापथस्तत्र भवा ऐर्यापथिकी। व्युत्पत्तिमात्रमिदं प्रवृत्तिनिमित्तं तु यः केवलयोगप्रत्यय उपशान्तमोहादित्रयस्य सातवेदनीयकर्मबन्धः सा [2]ऐर्यापथिकी।

१ एकादशं-सि. वि.॥ २ ईरिया० सि. वि.॥

इह खल्वनगारस्य साधोः समितिषु—ईर्यासमित्यादिषु गुप्तिषु—मनोगुप्त्यादिषु [1]सुगुप्तस्य सुसंवृतस्य सततमेवाप्रमत्तस्योपशान्तमोह-क्षीणमोह-सयोगकेवलिलक्षणगुणस्थानकत्रयवर्तिनः । अन्येषां तु अप्रमत्तानामपि कषायप्रत्ययकर्मबन्धसद्भावेन केवलयोगनिमित्तकर्म[2]बन्धासम्भवान्नाप्रमत्तशब्देनात्र ग्रहणम् , भगवतः—पूज्यस्य यावच्चक्षुःपक्ष्मापि निपतति—स्पन्दते, इदं च योगस्योपलक्षणम् , ततोऽयमर्थः-यावच्चक्षुर्निमेषोन्मेषमात्रोऽपि योगः सम्भवति तावत्सूक्ष्मा—एकसामायिकबन्धत्वेनात्यल्पा सातबन्धनलक्षणा क्रिया भवति, एषा हुः—स्फुटमैर्यापथिकी क्रिया त्रयोदशीति ॥८३१-८३५॥१२१॥

इदानीं आगरिसा सामाइए चउविहेवि एगभवे' इति द्वाविंशत्युत्तरशततमं द्वारमाह—

**सामाइयं चउद्धा सुय १ दंसण २ देस ३ सव्व ४ भेएहिं ।**
**ताण इमे आगरिसा एगभवं पप्प भणियव्वा ॥८३६॥**
**तिण्ह सहस्स पुहुत्तं च सयपुहुत्तं च होइ विरईए ।**
**एगभवे आगरिसा एवइया हुंति नायव्वा ॥८३७॥** [आव. नि. ८५७]

'सामे' त्यादिगाथाद्वयम् , समो-राग द्वेषयोरपान्तरालवर्ती मध्यस्थः । 'इण् गतौ' अयनं अयो गमनमित्यर्थः, समस्य अयः समायः-समीभूतस्य सतो मोक्षाध्वनि प्रवृत्तिः । समाय एव सामायिकम् , विनयादेराकृतिगणत्वात् स्वार्थिक इकण्प्रत्ययः, एकान्तोपशान्तगमनमिति भावः । तच्चतुर्धा--चतुर्भेदं श्रुत-दर्शन-देश-सर्वलक्षणैर्भेदैः, श्रुतसामायिकं सम्यक्त्वसामायिकं देशविरतिसामायिकं सर्वविरतिसामायिकं



१ गुप्तस्य सवृतस्य—सि. वि. ॥ २ ०बन्धोदयस० सि. ॥

चेत्यर्थः । तेषां च चतुर्णामप्येते--वक्ष्यमाणा आकर्षा एकं भवं उपलक्षणत्वान्नानाभवांश्च प्राप्य–आश्रित्य भणितव्याः । [1]तत्र आकर्षणमाकर्षः-प्रथमतया मुक्तस्य वा ग्रहणमित्यर्थः । ते च द्विधा-एकभविका नाना-भविकाश्च ॥८३६॥

तत्र प्रथमत एकभविकानाह—'तिण्हे'त्यादि, त्रयाणां–सम्यक्त्वसामायिक-श्रुतसामायिक-देश-विरतिसामायिकानामेकभवे सहस्रपृथक्त्वमाकर्षाणामुत्कर्षतो भवति । विरतेः सर्वविरतेस्त्वेकभवे शतपृथ-क्त्वमाकर्षाणामुत्कर्षतः, पृथक्त्वमिति द्विप्रभृतिरानवभ्यः । एवमेतावन्त उत्कर्षत एकभवे आकर्षा भवन्ति ज्ञातव्याः । परतस्तु प्रतिपातोऽलाभो वा, जघन्यतः पुनश्चतुर्णामपि सामायिकानामेक एवाकर्ष एकस्मिन् भवे भवति । उक्तं चावश्यकचूर्णौ—

'सुयसामाइयं एगभवे जहन्नेणं [2]एक्कंसि आगरिसेइ उक्कोसेणं सहस्सपुहुत्तंवारा, एवं सम्मत्तस्सवि, देसविरईए य पुण जहन्नेण [3]एक्कंसि, उक्कोसेणं सयपुहुत्तंवारा'' [भा. १/प. ४८८] इति ॥८३७॥

अथ नानाभवगतान् प्रतिपादयति—

**तिण्ह [4]असंखसहस्सा सहसपुहुत्तं च होइ विरईए ।**
**नाणभवे आगरिसा एवइया हुंति नायव्वा ॥८३८॥** [आव.नि. ८५८]

---

१ आद्वारं तुल्यप्रायमावश्यकमलयगिरिवृत्तिः, प. ४७२ ॥ २ एगम्मि आगरिसे–मु. ॥ ३ एकम्मि–मु. ॥
४ सहस्समसंखा–इत्यावश्यकनिर्युक्तौ पाठः ॥

'तिण्हं' इत्यादि, त्रयाणां—सम्यक्त्व-श्रुत-देशविरतिसामायिकानां नानाभवेष्वाकर्षाणामुत्कर्षतो भवन्त्यसङ्ख्येयानि सहस्राणि। यतस्त्रयाणामप्येकस्मिन् भवे सहस्रपृथक्त्वमाकर्षाणामुक्तम्, भवाश्च क्षेत्रपल्योपमासंख्येयभागगतनभः प्रदेशतुल्याः, △ 'संमत्तदेसविरिया पलियस्सासंखभागमेत्ता उ।'[ ] इति वचनात्। ततः सहस्रपृथक्त्वं तैर्गुणितमसङ्ख्येयानि सहस्राणि भवन्ति। सहस्रपृथक्त्वं च नानाभवेष्वाकर्षाणामुत्कर्षतो भवति विरतेः—सर्वविरतेः, तस्या हि खल्वेकभवे शतपृथक्त्वमाकर्षाणामुक्तं भवाश्चाष्टौ ततः शतपृथक्त्वमष्टभिर्गुणितं सहस्रपृथक्त्वं भवति। एतावन्तो नानाभवेष्वाकर्षा भवन्ति ज्ञातव्याः। अन्ये पठंति—'दोण्ह सहस्समसंखा' [ ] इति तत्रापि श्रुतसामायिकं सम्यक्त्व[1]सामायिकनान्तरीयकत्वादनुक्तमपि प्रतिपत्तव्यम्, सामान्यश्रुतस्य त्वक्षरात्मकस्य नानाभवेष्वाकर्षा अनन्तगुणा इति ॥८३८॥१२२॥

इदानीं [2]'सीलंगाणट्ठारससहस्स' त्ति त्रयोविंशत्युत्तरशततमं द्वारमाह—

**सीलंगाण सहस्सा अट्ठारस एत्थ हुंति [3]नियमेणं।**
**भावेणं समणाणं अक्खंडचरित्तजुत्ताणं ॥८३९॥**
**जोए ३ करणे ३ सन्ना ४ इंदिय ५ भोमाइ १० समणधम्मे य १०।**
**सीलंगसहस्साणं अट्ठारगस्स निप्फत्ती ॥८४०॥**

---

△ सम्यक्त्वदेशविरताः पल्यस्यासंखभागमात्रा एव ॥

१ ०सामायिकानन्त० मु. आव. मलय. वृत्तावपि सामायिकनान्त इति पाठः। ०सामायिकानान्त० इत्यावश्यकहारिभद्र्यां पाठः प. ३६३ ॥ २ सीलंगट्ठा० मु. ॥३ नायव्वा-ता. ॥

करणाइं तिन्नि जोगा मणमाईणि हवंति करणाइं ।
आहाराई सन्ना चउ [1]सोयाइंदिया पंच ॥८४१॥
भोमाई नव जीवा अजीवकाओ य समणधम्मो य ।
खंताइदसपयारो एवं [2]ठिए भावणा एसा ॥८४२॥
न करइ [3]मणेण आहारसन्नविप्पजढगो उ नयमेण
सोइंदियसंवरणो पुढविजिए खंतिसंजुत्तो ॥८४३॥
इय मद्दवाइजोगा पुढविकाए हवंति दस भेया ।
आउक्कायाईसुवि इअ एए पिंडिअं तु सयं ॥८४४॥
सोइंदिएण एवं सेसेहिंवि जं इमं तओ पंच ।
आहारसन्नजोगा इय सेसाहिं सहस्सदुगं ॥८४५॥
एवं मणेण [4]वयमाइएसु एव तु छस्सहस्साइं ।
न करे सेसेहिंपि य एए सव्वेहिं अट्ठारा ॥८४६॥ [पञ्चाशकप्र. १४।२ १]

'सोलंगाण' गाहा, शीलाङ्गानां– [5]चारित्रांशानां तत्कारणानां वा सहस्राण्यष्टादश, 'अत्र' यतिधर्मे शासने वा भवन्ति-स्युर्नियमेन--अवश्यम्भावेन न न्यूनान्यधिकानि [6]वेति भावः । कथमित्याह—'भावेन'

१ सण्गा–इति पञ्चाशके पाठः ॥ २ ठिय–मु. ॥ ३ माणेणाहारसण्णा० इति पञ्चाशके पाठः ॥ ४ वयसा०ता. ॥
५ आद्वारं तुल्यप्रायं पञ्चाशकवृत्तौ १४ । २, प. २२४ तः ॥ ६ चेति–सि. ॥

विशुद्धपरिणामेन बहिर्वृत्त्या तु कल्पप्रति[1]सेवायां न्यूनान्यपि स्युरिति भावः। केषामित्याह-श्रमणानां—साधूनाम्, न पुनः श्रावकाणाम्, सर्वविरतावेव तेषामुक्तसंख्याकानां सम्भवात्, अथवा भावेन श्रमणानाम्, न तु द्रव्यश्रमणानाम्, तेषामपि किंविधानामित्याह—'**अखण्डचरित्रयुक्तानां**' समग्र[2]चरणप्रतिसम्पन्नानां न तु दर्पप्रतिसेवया खण्डितचारित्रांशानाम्, नन्वखण्डचारित्रा एव सर्वविरता भवन्ति तत्खण्डने असर्वविरतत्वप्रसक्तेः, [3]तथा "[4]पडिवज्जइ अइकम्मे पंच' [ ] इत्यागमप्रामाण्यात् सर्वविरतः पश्चापि महाव्रतानि प्रतिपद्यते अतिक्रामति च पश्चाप्येव नैकादिकमिति, कथं सर्वविरतेर्देशखण्डनमिति ?, अत्रोच्यते, सत्यमेतत्, किन्तु प्रतिपत्त्यपेक्षं सर्वविरतत्वम्, परिपालनापेक्षया त्वन्यथाऽपि सञ्ज्वलनकषायोदयात्स्यात्, अत एवोक्तम्—⊙"सव्वेवि य अइयारा संजलणाणं तु उदयओ होंती" ति [आव. नि. ११२] अतिचारा हि चारित्रदेशखण्डनरूपा एव। तथैकव्रतातिक्रमे सर्वव्रतातिक्रम इति यदुक्तं तदपि विवक्षया। सा चेयम्—

"छेयस्स जाव दाणं ताव अइक्कमइ नेव एगंपि। एगं अइक्कमंतो अइकम्मे पंच मूलेणं ॥१॥"

एवमेव हि दशविधप्रायश्चित्तविधानं सफलं स्यात्, अन्यथा मूलाद्येव तत्स्यात्, व्यवहारनयतश्चातिचारसम्भवः निश्चयतस्त्वसर्वविरततया भङ्ग एवेति पर्याप्तं प्रपञ्चेनेति ॥८३९॥

कथं पुनरेकविधस्य शीलस्याङ्गानामष्टादश सहस्राणि भवन्तीत्याह—'जोए' इत्यादि, योगे—करणादिव्यापारे विषयभूते, करणे—योगस्यैव साधकतमे मनःप्रभृतिके, संज्ञादीनि चत्वारि पदानि द्वन्द्वैकत्ववन्ति,

१ ०सेवया–मु. ॥ २ चरणप्रतिपन्नानां–मु. ॥ ३ तथाहि–मु. ॥ ४ पडिवज्जइ अइ० इति पञ्चाशकवृत्तौ पाठः ॥
⊙ सर्वेऽप्यतिचाराश्च संज्वलनानामेवोदयतो भवन्ति ॥

तत्र संज्ञासु—चेतनाविशेषरूपासु आहारादिषु, इन्द्रियेषु—अक्षेपु श्रोत्रादिषु, भूम्यादिषु—पृथिव्यादिजीवकाये-ष्वजीवकाये च, श्रमणधर्मे च क्षान्त्यादौ शीलाङ्ग-सहस्राणां प्रस्तुतानामष्टादशपरिमाणस्य वृन्दस्येत्यष्टा-दशकम्, तस्य निष्पत्तिः—[1]सिद्धिर्भवतीति ॥८४०॥

योगादीनेव व्याख्यातुमाह—'**करणाइं तिन्नि**' इत्यादिगाथाद्वयम्, विभक्तिलोपात्करणादयः-करण-कारणा-ऽनुमतयस्त्रयो योगा भवन्ति । तथा मनआदीनि तु—मनो-वचन-कायरूपाणि पुनर्भवन्ति—स्युः करणानि त्रीण्येव । तथा आहारादयः—आहार-भय-मैथुन-परिग्रहविषया वेदनीय-भयमोहनीय-वेद-मोहनीय-लोभकषायोदयसम्पाद्या अध्यवसायविशेषरूपाः । '**चउ**' त्ति चतस्रः संज्ञा भवन्ति । तथा श्रोत्रा-दीनि—पश्चानुपूर्व्या श्रोत्र-चक्षु-घ्राण-रसन स्पर्शनानीन्द्रियाणि पञ्च भवन्ति । उत्तरोत्तरगुणावाप्तिसाध्यानि शीलाङ्गानीति ज्ञापनार्थमिन्द्रियेषु पश्चानुपूर्वीति । तथा भूम्यादयः—पृथिव्यप्तेजो-वायु-वनस्पति-द्वि-त्रि-चतुः-पञ्चेन्द्रिया नव जीवा—जीवकायाः । अजीवकायस्तु—अजीवकायः पुनर्दशमो य परिहार्यतयोक्तः, स च महामूल्यवस्त्रपात्र[2]सुवर्णरजतादिरूपो दुष्प्रत्युपेक्षिता-ऽप्रत्युपेक्षितदूष्य-पुस्तक-चर्म-तृणपञ्चकादिरूपश्च । तथा श्रमणधर्मस्तु—यतिधर्मः पुनः क्षान्त्यादिः—क्षान्ति-मार्दवा-ऽऽर्जव-मुक्ति-तपः-संयम-सत्य शौचा-ऽऽकिञ्चन्य-ब्रह्मचर्यरूपो दशविध इति । '**एवं**'ति एवमुक्तन्यायेन '**स्थिते**' औत्तराधर्येण पट्टकादौ व्यवस्थिते [3]त्रि-त्रि-चतुः पञ्च-दश-दशसङ्ख्ये मूलपदकलापे '**भावना**' भङ्गप्रकाशना '**एषा**' अनन्तरवक्ष्यमाणलक्षणा शीला-ङ्गनिष्पत्तिविषयेति ॥८४१-८४२॥

१ सिद्धिर्भवति—मु. ॥ २ ०सुवर्ण० सि. वि. नास्ति ॥ ३ त्रिचतुः० मु. ॥

तामेवाह—'न करेई' त्यादि, न करोतीति करणलक्षणः प्रथमयोग उपात्तः, मनसेति 'प्रथमकरणम्, 'आहारसन्नविप्पजढगो उ' त्ति आहारसंज्ञाविप्रहीणः सन्, अनेन च प्रथमसंज्ञा, तथा नियमेन अवश्यन्तया श्रोत्रेन्द्रियसंवरणो—निरूद्धरागादिमच्छ्रोत्रेन्द्रियप्रवृत्तिः, अनेन च प्रथमेन्द्रियम्, एवंविधः सन् किं न करोतीत्याह—पृथिवीजीवान् आरम्भविषयानिति शेषः, पृथिवीजीवारम्भं न करोतीति [2]तात्पर्यम्, अनेन च प्रथमजीवस्थानम्। क्षान्तिसंयुक्तः—क्षान्तिसम्पन्नः, अनेन च प्रथमश्रमणधर्मभेद [3]उक्त इति ॥८४३॥

तदेवमेकं शीलाङ्गमाविर्भावितमिति, अथ शेषाण्यपि तान्यतिदेशतो दर्शयन्नाह—'इय मद्दवाइजोगा' इत्यादिगाथात्रयम्, 'इति' अनेनैव पूर्वोक्ताभिलापेन मार्दवादियोगात्—मार्दवाऽऽर्जवादिपदसंयोगेन 'पृथिवीकाये' पृथिवीकायमाश्रित्य पृथिवीकायारम्भमित्यभिलापेनेत्यर्थः, सम्भवन्ति—स्युर्दश भेदा—दश शीलविकल्पाः, अप्कायादिष्वपि नवसु स्थानेषु, अपिशब्दो दशेत्यस्येह सम्बन्धनार्थः, इत्यनेन क्रमेण एते सर्वेऽपि भेदाः 'पिंडियं तु' त्ति प्राकृतत्वात् पिण्डिताः पुनः सन्तः, अथवा पिण्डितं—पिण्डमाश्रित्य, शतं—शतसङ्ख्याः स्युरिति ॥८४४॥

श्रोत्रेन्द्रियेणैतत् शतं लब्धम्, शेषैरपि चक्षुरादिभिर्यद्-यस्मादिदं शतं प्रत्येकं लभ्यते, ततो [4]मिलितानि पञ्च शतानि स्युः, पञ्चत्वादिन्द्रियाणां, एतानि चाहारसंज्ञायोगलब्धानि इति, एवं शेषाभिरपि भयसंज्ञादिभिस्तिसृभिः पञ्च पञ्च शतानि स्युः, सर्वमीलने च सहस्रद्वयं स्यात्। यतश्चतस्रः संज्ञा इति। एतत्स-



१ प्रथमं-मु. ॥ २ तात्पर्यार्थः-मु. ॥ ३ उक्त-सि.वि नास्ति ॥ ४ मीलितानि-इति पञ्चाशकवृत्तौ[प २२५] पाठः ॥

हस्रद्वितयं मनोयोगेन लब्धम् , 'वयमाइएसु' त्ति वागाद्योः—वचन-काययोः प्रत्येकमेतत्सहस्रद्वितयम् , इत्येवं षट् सहस्राणि । त्रिसङ्ख्यत्वात् मनो-वचन-काययोगानाम् , एतानि न करोतीत्यनेन लब्धानि । शेषयोरपि च कारणा-ऽनुमत्योः षट् षट् सहस्राणि स्युः, एते अनन्तरोक्ताः सर्वेऽपि शीलभेदाः पिण्डिताः सन्तोऽष्टादश सहस्राणि ❀ भवन्तीति ॥८४५-८४६॥ आलापकगाथाश्चैवमत्र करणीयाः—

'न करेमि मणसाऽऽहारसन्नविरओ उ सोयसंगुत्तो । पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥१॥

एवं मद्दवगुणे वट्टमाणोऽहं २ । [1]अज्जवगुणे वट्टमाणोऽहं ३ । यावद् बंभगुणे वट्टमाणोऽहं १० । एवमप्कायादिष्वपि गाथा भणनीयाः । तथा—

कारेमि न मणसाहारसन्नविरओ उ सोयसंगुत्तो । पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥ १ ॥'

इत्यादि तथा—

[2]'नऽणुमन्ने मणसाहारसन्नविरओ उ सोयसंगुत्तो । पुढवीकायारंभं खंतिगुणे वट्टमाणोऽहं ॥१॥

इत्यादि । [3]नन्वेकैकयोगे एवाष्टादश सहस्राणि स्युर्यदा तु द्व्यादिसंयोगजन्या भङ्गका इह गृह्यन्ते तदा बहुतराः स्युः, तथाहि—एकद्व्यादिसंयोगेन योगेषु सप्त विकल्पाः, एवं करणेष्वपि, संज्ञासु पञ्चदश, इन्द्रियेष्वेकत्रिंशत् , भूम्यादिषु त्रयोविंशत्यधिकं सहस्रम् , एवं क्षमादिष्वपीति, एष च राशीनां परस्परगुणने द्वे कोटीसहस्रे [4]त्रीणि कोटीशतानि चतुरशीतिः कोटयः एकपञ्चाशल्लक्षाणि [5]त्रिपष्टिः सहस्राणि द्वे शते

❀ द्रष्टव्यं पृ. ७६ ॥ १ अज्जवगुणवट्टमाणो—सि.॥ २ णणु० सि. ॥ ३ तुलना—पञ्चाशकवृत्तिः प. २२६ ॥
४ त्रि कोटि० सि. वि. ॥ ५ त्रीणि षष्टिः मु. ॥

❁ अष्टादशसहस्रशीलाङ्गरथ-स्थापना च विचारसारे [पृ. ५६] इत्थम्-
[विशेषार्थं 'श्री शीलांगादि रथ संग्रह' पुस्तके द्रष्टव्यम्]

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| जे नो करंति ६००० | जे न कारवेंति ६००० | जे न अणुमन्नंति ६००० | | | | | | | |
| मणसा २००० | वयसा २००० | कायसा २००० | | | | | | | |
| निज्जियाहारसन्न ५०० | निज्जयभयसन्न ५०० | निज्जियमेहुणसन्न ५०० | निज्जियपरिग्गहसन्न ५०० | | | | | | |
| सोइंदी १०० | चक्खुइंदी १०० | घाणिंदी १०० | रसणेंदी १०० | फासेंदी १०० | | | | | |
| पुढवीकायारंभं १० | आउक्कायारंभं १० | तेउक्कायारंभं १० | वाउक्कयारंभ १० | वणस्सइकायारंभ० १० | बेइंदियारभं १० | तेइंदियारंभं १० | चउरिंदियारंभं १० | पंचिंदियारंभं १० | अजीवाणारंभं १० |
| खंति जुआ ते मुणी धन्ना १ | समद्दवा ते मुणी धन्ना १ | सअज्जवा ते मुणी धन्ना १ | समुत्तिणी ते मुणोधन्ना १ | तवजुत्ता ते मुणी धन्ना १ | ससंजमा ते मुणी धन्ना १ | सच्चजुआ ते मुणी धन्ना १ | सोयजुआ ते मुणी धन्ना १ | अकिंचणा ते मुणी धन्ना १ | बंभजुआ ते मुणी धन्ना १ |

॥७६॥

पञ्चषष्टिश्चेति २३८४५९६३२६५ ततः किमित्यष्टादशैव महस्राण्युक्तानि ?, उच्यते यदि श्रावकधर्मवदन्यतरभङ्गकेन सर्वविरतिप्रतिपत्तिः स्यात्तदा युज्येत तद्भणनम्, न चैवमेकतरस्यापि शीलाङ्गभङ्गकस्य शेषसद्भाव एव भावादन्यथा सर्वविरतिरेव न स्यादिति । उक्तं च—''इत्थं इमं विन्नेयं अइदंपज्जं तु बुद्धिमंतेहिं । एक्कंपि सुपरिसुद्धं सीलंगं सेससब्भावे ॥ १ ॥'' [पञ्चाशकप्र. १४।१०] अस्या व्याख्या—अत्र शीलाङ्गाधिकारे इदं विज्ञेयमैदम्पर्यं—तत्त्वं बुद्धिमद्भिः पुरुषैः, यदुत—एकमपि सुपरिशुद्धं शीलाङ्गं शेषसद्भावे—तदपरशीलाङ्गसत्तायामेव, तदेवं समुदितान्येवैतानि भवन्तीति न द्व्यादिसंयोगभङ्गकोपादानम्, अपि तु सर्वपदान्त्यभङ्गस्येयमष्टादशसहस्रांशतोक्ता, यथा त्रिविधं त्रिविधेनेत्यस्य नवांशतेति, अत एव श्रावकाणामेतानि न भवन्त्येव, किन्तु मनःस्थैर्यसम्पादनार्थं तेऽप्यनुमतिप्रधानेन स्वाभिलापेन गाथोच्चारणमात्रमा'सूत्रयन्ति'[1]। अभिलापश्चायं—

'न करेंती मणसाहारसन्नविरया उ सोयसंगुत्ता । पुढवीकायारंभं धन्ना जे खंतिगुणजुत्ता १॥१॥एवं धन्ना जे [2]मद्दवुज्जुत्ता २, धन्ना जे अज्जवुज्जुत्ता ३, एवं यावद्धन्ना जे बंभगुणजुत्ता', इत्यादि ॥८४६॥१२३॥

इदानीं **'नयसत्तगं'** ति, चतुर्विंशत्युत्तरशततमं द्वारमाह—

**नेगम १ संगह २ ववहार ३ रिज्जुसुए ४ चेव होइ बोद्धव्वे ।**
**सद्दे ५ य समभिरूढे ६ एवंभूए ७ य मूलनया ॥८४७॥**

१ °सूत्रयन्तीति—सि. ॥ २ मद्दवजुत्ता- वि. ॥

**एक्केक्को य सयविहो सत्त नयसया हवंति एवं तु ।**
**बीओवि य आएसो पंचेव सया नयाणं तु ॥८४८॥** [आ. नि. ७५४, ७५९]

**नेगम'** गाहा, 'अनेकधर्मकं वस्त्वनवधारणपूर्वकमेकेन नित्यत्वाद्यन्यतमेन धर्मेण [2]प्रतिपाद्य स्वबुद्धि नीयते—प्राप्यते येनाभिप्रायविशेषेण स ज्ञातुरभिप्रायविशेषो नयः । अयमत्र तात्पर्यार्थः—इह यो नाम नयो नयान्तरसापेक्षतया [3]स्याद्वादलाञ्छितं वस्तु प्रतिपद्यते स परमार्थतः परिपूर्णं वस्तु गृह्णातीति प्रमाण एवान्तर्भवति । यस्तु [4]नयवादान्तरनिरपेक्षतया स्वाभिप्रेतेनैव धर्मेणानवधारणपूर्वकं वस्तु परिच्छेत्तुमभिप्रैति स वस्त्वेकदेशपरिग्राहकत्वान्नय इत्युच्यते । स च नियमान्मिथ्यादृष्टिरेव, अयथावस्थितार्थवस्तुपरिग्राहकत्वात् । अत एवोक्तमन्यत्र ∧ 'सव्वे नया मिच्छावाइणो' [ ] त्ति । यत एव च नयवादो मिथ्यावादः, तत एव च [5]जिनप्रवचनतत्त्ववेदिनो मिथ्यावादित्वपरिजिहीर्षया सर्वमपि स्यात्कारपुरस्सरं भाषन्ते, न तु जातुचिदपि स्यात्कारविरहितम्, यद्यपि च लोकव्यवहारपथमवतीर्णा न[6] सर्वत्र सर्वदा साक्षात्स्यात्पदं प्रयुञ्जते तथापि तत्राप्रयुक्तोऽपि सामर्थ्यात् स्याच्छब्दो द्रष्टव्यः । प्रयोजकस्य कुशलत्वात् । उक्तं च—

"अप्रयुक्तोऽपि सर्वत्र, स्यात्कारोऽर्थात्प्रतीयते । विधौ निषेधेऽन्यत्रापि, कुशलश्चेत्प्रयोजकः ॥१॥"

अत्र 'अन्यत्रापी' ति अनुवादा-ऽतिदेशादिवाक्येषु । ते च नया मूलभेदापेक्षया सप्त, तथा चाह—**'नेगमे'**

---

१ तुलना-आव मलय-वृत्तिः प ३६६, विशेषावश्यकभा. गा. २१८० ॥ २ प्रतिपाद्यस्य बुद्धि—इत्यावश्यक. मलय. वृत्तौ-पाठः ॥ ३ स्यात्पदला० इत्यावश्यक. मलय वृत्तौ पाठः ॥ ४ नयप्रवादा० सि. वि. ॥ ∧ सर्वे नया मिथ्यावादिनः । ५ जिनप्रवचनवेदिनो—मु. । आव. मलय. वृत्तावपि ०तत्त्व० इति पाठोऽस्ति ॥ ६ न च सर्वत्र-सि. ॥

त्यादि, नैगमः संग्रहो व्यवहार ऋजुसूत्रश्चैव भवति बोद्धव्यः । शब्दश्च समभिरूढ एवंभूतश्चेति मूलनया इति गाथासङ्क्षेपार्थः । [1]तत्र न एकं नैकं नायं नञ् किन्तु न इति 'अन् स्वरे' इति न भवति, प्रभूतानीत्यर्थः ।, ततो [2]नैकैः-प्रभूतमङ्ख्याकैर्मानैः-महासामान्या-ऽवान्तरसामान्यविशेषादिविषयैः प्रमाणैर्मिमीते-परिच्छिनत्ति वस्तुजातमिति नैगमः, पृषोदरादित्वादिष्टरूपसिद्धिः । यद्वा निश्चितो गमो [3]निगमः, परस्परविविक्तसामान्यादिवस्तुग्रहणं स एव प्रज्ञादेराकृतिगणतया स्वार्थिकाण्प्रत्ययविधानान्नैगमः, अथवा गमाः-पन्थानो नैके गमा यस्य स [4]नैगमः, पृषोदरादित्वात्ककारस्य लोपः, बहुविधवस्त्वभ्युपगमपर इत्यर्थः । तथाहि-एष सत्तालक्षणं महासामान्यमवान्तरसामान्यानि च द्रव्यत्व-गुणत्व-कर्मत्वादीनि तथा अन्त्यान् विशेषान्-सकलासाधारणरूपान् अवान्तरविशेषांश्च-पररूपव्यावर्तनक्षमान् सामान्यादत्यन्तविनिर्लुठितस्वरूपान् प्रतिपद्यते । यतोऽसावेवमाह- [5]संविन्निष्टाः किल पदार्थव्यवस्थितयः । तत्र सर्वेष्वपि पदार्थेषु द्रव्यादिरूपेषु सत् सदित्यविशेषेण प्रत्यय उपजायते वचनं च, न चैते तथारूपे प्रत्ययवचने द्रव्यादिमात्रनिबन्धने, द्रव्यादीनामसर्वव्यापकत्वात्, तथाहि-यदि द्रव्यमात्रनिबन्धनः सदिति प्रत्ययस्तर्हि स गुणादिषु न भवेत्, तत्र द्रव्यत्वाभावात्, गुणमात्रनिबन्धनत्वे द्रव्यादिषु न स्यात्, तत्र गुणत्वाभावात्, एवं सर्वत्रापि भावनीयम्, ततोऽस्ति द्रव्यादिभ्यो व्यतिरिक्तं महासत्ताख्यं नाम सामान्यं यद्वशादविशेषेण

१ तुल्यप्रायमावश्यक. मलयवृत्तिः प. ३७१ B ॥ २ तुलना-विशेषावश्यक भा. २१८६ तः ॥ ३ नैगमः - मु. ॥
४ तुलना-"नैगम इति प्राकृते ककारस्याश्रवणात् गमनं गमः पन्थाः-नै[क] गमो नैकपथः" इति विशेषाव.भा. कोट्याचार्यवृत्तौ (प. ५०६)॥ ५ संविन्निविष्टाः-मु. । आव. मलय. वृत्तावपि संविन्निष्टाः-इति पाठः ॥

सर्वत्र सदिति प्रत्यय इति । तथा नवसु द्रव्येषु द्रव्यं द्रव्यमित्यनुगताकारप्रत्ययदर्शनात् द्रव्यत्वं नामावान्तरसामान्यं प्रतिपत्तव्यम्, एवं गुणत्वकर्मत्वगोत्वाश्वत्वादीन्यपि, अमूनि चावान्तरसामान्यानि सामान्यविशेषा इत्युच्यन्ते, यत एतानि स्वस्वाधारविशेषेषु अनुगताकारप्रत्ययवचनहेतुत्वात् सामान्यानि विजातीयेभ्यो व्यावर्तमानत्वाच्च विशेषा इति सामान्यविशेषाः, तथा तुल्यजातिगुणक्रियाधाराणां नित्यद्रव्याणां परमाण्वाकाशदिगादीनामत्यन्तव्यावृत्तिबुद्धिहेतुत्वादन्त्या विशेषाः ते च योगिनामेव प्रत्यक्षाः, अस्मदादीनां त्वनुमेयाः, तथाहि–तुल्यजातिगुणक्रियाधाराः परमाणवो व्यावर्त्तकधर्मसम्बन्धिनो [1]व्यावृत्तप्रत्ययविषयत्वात्, [2]मुक्ताफलराश्यन्तर्गतसचिह्नमुक्ताफलवत्, ये चावान्तरविशेषा घटपटादीनामितरेतरव्यावर्तनक्षमास्ते आबालगोपालाङ्गनादिजनानामपि प्रत्यक्षाः, एते च महासामान्यावान्तर[3]सामान्यान्त्यविशेषावान्तरविशेषाः परस्पर[4]विसकलितस्वरूपास्तथैव प्रतिभासमानत्वात्, तथाहि–न सामान्यग्राहिणि विज्ञाने विशेषावभासः नापि विशेषग्राहिणि सामान्यावभासः, ततः परस्परविनि[5]लुठितस्वरूपाः, तथा चात्र प्रयोगः–यद्यथाऽवभासते तत्तथाऽभ्युपगन्तव्यं, यथा नीलं नीलतया, अवभासन्ते [6]च परस्पर[7]विसकलितस्वरूपा इति नैगमः । नन्वेव यदि सामान्यविशेषाभ्युपगमपरस्तर्हि यत्सामान्यं तद् द्रव्यं ये तु विशेषास्ते पर्याया इति परमार्थतो

१ व्यावृत्ति० मु. । व्यावर्तन० जे. ॥ २ मुक्ताफलमास्यन्तर्गतचिह्न० इत्यावश्यक· मलयवृत्तौ पाठः ॥
३ ०सामान्यान्त० इत्यावश्यक· मलय· वृत्तौ (प. ३७२) पाठः ॥
४ विसंक० सि. । ०विशक० इत्यावश्यक· मलय· वृत्तौ पाठः ॥ ५ ०लुण्ठित० सि. आव. मलयवृत्तौ च ॥
६ च ते पर० मु । आव. मलय. वृत्तावपि च पर० इति पाठः-मु. ॥ ७ विसं० सि. ॥

द्रव्यास्तिकपर्यायास्तिकनयमतावलम्बित्वात् सम्यग्दृष्टिरेव प्रतिपन्नजिनमतत्वात्तथाविधसम्यग्जैनसाधुवत् ततः कथं मिथ्यादृष्टिः १, तदेतदयुक्तम्, प्रतिपन्नजिनमतत्वासिद्धेः परस्पर[1]विसकलितसामान्यविशेषाभ्युपगमात्, तथाहि–एष परस्परमेकान्ततो विभिन्नावेव सामान्यविशेषाविच्छति, गुणगुणिनाम[2]वयवावयविनां क्रियाकारकाणां चात्यन्तभेदम्, न पुनर्जैनसाधुरिव सर्वत्रापि भेदाभेदावतो मिथ्यादृष्टिः कणादवत्, कणादेनापि हि सकलमप्यात्मीयं शास्त्रं द्वाभ्यामपि द्रव्यास्तिकपर्यायास्तिकनयाभ्यां समर्थितं तथापि [3]तन्मिथ्या, स्वविषयप्रधानतया परस्परमनपेक्षयोः सामान्यविशेषयोरभ्युपगमात्, उक्तं च–☐"जं सामन्नविसेसे परोप्परं वत्थुतो य [4]से भिन्ने । (ग्रन्थाग्रं १००००) मन्नइ अच्चंतमतो मिच्छादिट्ठी कणादोव्व ॥१॥
[5]दोहिंवि नएहिं नीयं सत्थमुलूगेण तहवि मिच्छत्तं । जं सविसयप्पहाणत्तणेण अन्नोन्ननिरवेक्खा ॥२॥"
[विशेषाव. २१९४-५, सन्मतितर्क प्र. ३-४९] १।

तथा सङ्गृह्णाति– [6]अशेषविशेषातिरोधानद्वारेण सामान्यरूपतया समस्तं जगदादत्ते इति सङ्ग्रहः, तथाहि–अयमेवं मन्यते–सामान्यमेवैकं तात्त्विकं न विशेषाः, ते हि भावलक्षणसामान्याद्व्यतिरिक्ता वा

१ विसं० मु.। आव. मलय. वृत्तावपि विस० इति पाठः ॥
२ ०वयव्यवयिनां-इत्यावश्यक. मलय. वृत्तौ पाठः ॥ ३ तन्मिथ्यात्व-मु.। आव. मलय. वृत्तावपि तन्मिथ्या-इति पाठः ॥
☐ यत् सामान्यविशेषौ परस्परं वस्तुतश्च तौ भिन्नौ । मन्यते अत्यन्तमतः कणाद इव मिथ्यादृष्टिः ॥१॥ द्वाभ्यामपि नयाभ्यामुलूकेन शास्त्रं नीतं तथापि मिथ्यात्वं । यत् स्वविषयप्रधानत्वात् अन्योऽन्यनिरपेक्षौ इति वदति ॥२॥
४ सो-इति विशेषावश्यकभाष्ये पाठः ॥ ५ दोहिवि-मु. ॥ ६ अशेषविशेषा० मु.।तुलना-आवश्यक.मलय.वृत्तिः प. ३७४ ॥

भवेयुरव्यतिरिक्ता वा ? गत्यन्तराभावात्, प्रथमपक्षे न सन्त्येव विशेषाः, भावाद्व्यतिरिक्तत्वादाकाशकुशेशयवत्, अथ द्वितीयः पक्षस्तर्हि विशेषा अपि भावमात्रमेव, तथाहि—भावमात्रं विशेषास्तदव्यतिरिक्तत्वात्, इह यद्यस्मादव्यतिरिक्तं तत्तदेव, यथा भावस्य स्वरूपम्, अव्यतिरेकिणश्च भावाद्विशेषा इति, किंच-विशेषाग्रहो विशेषेण त्याज्यो विशेषव्यवस्थापकप्रमाणाभावात्, तथाहि-भेदरूपा विशेषाः, न च [1]किञ्चित्प्रमाणं भेदमवगाहते, प्रत्यक्षं हि भावसम्पादितसत्ताकम्, अतस्तमेव साक्षात्कर्तुमलं नाभावम्, अभावस्य सकलशक्ति[2]विरहरूपतया तदुत्पादने व्यापाराभावात्, अनुत्पादकस्य च साक्षात्करणे सर्वसाक्षात्करणप्रसङ्गः, तथा च सति विशेषाभावा[3]त्सर्वो द्रष्टा सर्वदर्शी स्यात्, अनिष्टं चैतत्, तस्माद्भव ग्राहकमेव प्रत्यक्षमेष्टव्यम्, स च भावः सर्वत्राविशिष्टस्तथैव तेन ग्राह्य इति न प्रत्यक्षाद् विशेषावगतिः, नाप्यनु[4]मानादेः, प्रत्यक्षपूर्वकत्वाच्छेषप्रमाणपटलस्य, ततः सामान्यमेव परमार्थतः सत् न विशेषा इति सङ्ग्रहः २ ।

तथा [5]व्यवहरणं व्यवहारः, यदिवा विशेषतोऽवह्रियते—निराक्रियते सामान्यमनेनेति व्यवहारः, विशेषप्रतिपादनपरो व्यवहारनय इत्यर्थः । स ह्येवं विचारयति— [6]सदित्युक्ते घटपटाद्यन्यतमो विशेष एव

१ क्ष्चिन प्रमाणं मु. । किञ्चित्प्रमाणभेदमवगाहंते- इत्यावश्यक. मलय. वृत्तौ पाठः ॥
२ ०विष्टब्धरूपतया-इत्यावश्यक. मलय वृत्तौ पाठः ॥ ३ सर्वोऽपि-मु. । आवश्यक. मलय. वृत्तावपि सर्वो-इति पाठः ॥
४ ०मानादिः- इत्यावश्यक. मलय. वृत्तौ पाठ. ॥ ५ तुलना-आवश्यक-मलय. वृत्तिः प. ३७४ B ॥
६ यदि सदित्युक्ते-मु. । सदित्युक्तो- इत्यावश्यक. मलय. वृत्तौ पाठः ॥

कोऽप्यनिर्दिष्टस्वरूपः प्रतीयते, न सङ्ग्रहनयसम्मतं सामान्यं, तस्यार्थक्रियासामर्थ्यविकलतया सकललोकव्यवहारपथातीतत्वात् ततो विशेष एवास्ति न सामान्यम्, इतश्च न सामान्यमुपलब्धिलक्षणप्राप्तस्य तस्यानुपलब्धेः । इह यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तदसदिति व्यवहर्तव्यम् । यथा क्वचित्केवलभूतलप्रदेशे घटः, नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सत् सङ्ग्रहनयसम्मतं सामान्यमिति स्वभावानुपलब्धिः, अपि च–सामान्यं विशेषेभ्यो व्यतिरिक्तं स्यादव्यतिरिक्तं वा स्यात्?, यद्याद्यः पक्षस्तर्हि सामान्यस्याभाव एव, विशेषव्यतिरिक्तस्य सामान्यस्यासम्भवात्, न हि मुकुलितार्धमुकुलितादिविशेषविकलं किमप्याकाशकुसुममस्तीति परिभावनीयमेतत् । अथाव्यतिरिक्तं ततो विशेषा एव, न सामान्यम्, तदव्यतिरिक्तत्वात्तत्स्वरूपवत् । यदपि चोक्तम्–

'प्रत्यक्षं मात्रसम्पादितसकलसत्ताकमतस्तमेव साक्षात्कर्तुमलम्' [ ] इत्यादि, तदपि बालप्रलपितम्, प्रत्यक्षं हि नाम तेन सम्पादितसत्ताकमुच्यते यदुत्पन्नं सत्प्रत्यक्षं साक्षात् करोति, कुरुते च प्रत्यक्षं साक्षात् घटपटादिरूपं विशेषं न सङ्ग्रहनयसम्मतं सामान्यम्, न च विशेषो घटपटादिरूपोऽभावो भावात्मकत्वात्, ततो नार्थक्रियाशक्तिविकल इत्यदोषः, ततो विशेष एव प्रत्यक्षादिप्रमाणप्रसिद्धो न सामान्यमिति सामान्याग्रह एव त्याज्यो न विशेषाग्रहः, किञ्च–यदेवार्थक्रियाकारि तदेव परमार्थसत्, न च सामान्यं [1]दोहदाहादिक्रियासूपयुज्यते किन्तु विशेषा एव गवादयः ततस्त एव तात्त्विकाः न सामान्यमिति,

१ दोहादिक्रिया० मु. । दोहवाहादि० सि. । वाहदाहादि० वि. । दोहदाहादि० इत्यावश्यक० मलयवृत्तौ पाठः ॥

एष च व्यवहारनयो लोकसव्यवहारपरः ततो यदेव लोकोऽभिमन्यते तदेवैषोऽपि न शेषं सन्तमपि, लोकश्च भ्रमरादौ परमार्थतः पञ्चवर्णाद्युपेतेऽपि कृष्णवर्णादित्वमेव प्रतिपन्नः, तस्य स्पष्टतयोपलभ्यमानत्वात्, तत एषोऽपि तदनुयायितया तदेवेच्छति न शेषान् सतोऽपि शुक्लादीन् वर्णानिति ३ । तथा [1]ऋजु–प्रगुणमकुटिलमतीतानागतपरकीयवक्रपरित्यागाद्वर्तमानक्षणविवर्ति स्वकीयं च सूत्रयति–निष्टङ्कितं दर्शयतीति ऋजुसूत्रः, यदिवा ऋजुश्रुत इति शब्दसंस्कारः, तत्र ऋजुः–पूर्वोक्त[2]वक्रविपर्ययादभिमुखं श्रुतं–ज्ञानमस्येति ऋजुश्रुतः, शेषज्ञानानभ्युपगमात्, तथाहि–[3]एष मन्यते यदतीतमनागतं वा तद्यथाक्रमं विनष्टत्वात् अलब्धात्मलाभाच्च नार्थक्रियासमर्थं नापि प्रमाणगोचरो[4]ऽथवार्थक्रियासमर्थं प्रत्यक्षादिप्रमाणपथमवतीर्णं वस्तु न शेषम्, अन्यथा शशशृङ्गादेरपि वस्तुत्वप्रसक्तेः, ततोऽर्थक्रियासामर्थ्यविकलत्वात् प्रमाणपथातीतत्वाच्च नातीतमनागतं वा वस्तु, यदपि च परकीयं वस्तु तदपि परमार्थतोऽसत् निष्प्रयोजनत्वात् परधनवत्, एष च ऋजुसूत्रो वार्तमानिकं वस्तु प्रतिपद्यमानो लिङ्ग-वचनभिन्नमप्येकं प्रतिपद्यते, तत्रैकमपि त्रिलिङ्गं यथा तटस्तटी तटम्, तथैकमपि एकवचन-द्विवचन-बहुवचनवाच्यं यथा [5]गुरुर्गुरवः, गोदौ ग्रामः, आपो जलम्ः, दाराः कलत्रमित्यादि, निक्षेपचिन्तायां च नाम-स्थापना-द्रव्य-भावरूपांश्चतुरोऽप्यसौ निक्षेपानभिमन्यते ४ ।

तथा [6]शब्द्यते–प्रतिपाद्यते वस्त्वनेनेति शब्दः, शब्दस्य यो वाच्योऽर्थः स एव येन नयेन तत्त्वतो गम्यते

१ तुलना–आवश्यक. मलय वृत्तिः प. ३७५ ॥ २ ०वक्र० सि. नास्ति ॥
३ अयं-मु । आव. मलयवृत्तावपि एष इति पाठः ॥ ४ ०ऽथ चार्थ० मु. ॥
५ गुरुर्गुरू गुरवः-मु. । आव. मलय. वृत्तावपि गुरुर्गुरवः इति पाठः ॥ ६ तुलना-आव. मलय. वृत्तिः प. ३७५ B ॥

न शेषः स नय उपचारात् शब्द इत्युच्यते, अस्य च द्वितीयं नाम साम्प्रत इति, साम्प्रतवस्त्वाश्रयणात् साम्प्रतः, तथाहि—एषोऽपि ऋजुसूत्रनय इव साम्प्रतमेव वस्त्वभ्युपगच्छति [1]नातीतमनागतं वा, नापि वर्तमानमपि परकीयम्, अपि च—निक्षेपचिन्तायां भावनिक्षेपमेव केवलमेष मन्यते न नामादीन् निक्षेपान्, तथा च नामादिनिक्षेपनिराकरणाय प्रमाणमाह—नामस्थापनाद्रव्यरूपा घटा न घटाः घटकार्यकारित्वाभावात्, यद् घटकार्यकारि न भवति तन्न घटो यथा पटस्तथा चामी घटा घटकार्यकारिणो न भवन्ति तस्मान्न घटा इति नामादिघटानां घटत्वाभावः, इतश्च घटत्वाभावस्तल्लिङ्गादर्शनात्, न खलु नामादिघटेषु घटलिङ्गं पृथुबुध्नोदराद्याकाररूपं जलधारणरूपं वा किमप्युपलभामहे, अनुपलभमानाश्च तेषु कथं घटव्यपदेशप्रवृत्तिमिच्छामः ?, अपि च—नामादीन् घटान् घटत्वेन व्यपदिशत ऋजुसूत्रस्य प्रत्यक्षविरोधः, [2]अघटरूपतया पटादीनामिव तेषां प्रत्यक्षत उपलभ्यमानत्वात्। अन्यच्च एष लिङ्गवचनभेदाद्वस्तुनो भेदं प्रतिपद्यते, यथा अन्य एव तटीशब्दस्य वाच्योऽर्थः, अन्य एव तटशब्दस्य पुल्लिङ्गस्य, अपर एव च नपुंसकलिङ्गस्य, तथा अन्य एव गुरुरित्येकवचनवाच्योऽर्थः, अन्य एव च गुरव इति बहुवचनवाच्यः, ततो न बहुवचनवाच्योऽर्थ एकवचनेन वक्तुं शक्यते, नाप्येकवचनवाच्यो बहुवचनेन, तथा न पुँल्लिङ्गार्थो नपुंसकलिङ्गेन वक्तुं शक्यः नापि स्त्रीलिङ्गेन, नापि [3]नपुंसकः पुंल्लिङ्गेन स्त्रीलिङ्गेन वा, नापि स्त्रीलिङ्गः पुंल्लिङ्गेन नपुंसकलिङ्गेन वा, अर्थाननुयायितया तेषामर्थतो भिन्नत्वात्, तथा चात्र प्रयोगः—ये पर-

१ नागतं-सि.। नाप्यतीतमनागतं -इत्याव. मलय. वृत्तौ पाठः॥ २ अघटस्वरूप० इत्यावश्यक. मलय. वृत्तौ पाठः॥
३ नपुंसकलिङ्गः -इत्यावश्यक. मलय. वृत्तौ पाठः॥

स्परमर्थतोऽननुयायिनस्ते भिन्नार्थी इति व्यवहर्तव्याः यथा घटपटादिशब्दाः, परस्परमर्थतोऽननुयायिनश्च लिङ्गवचनभेदभिन्नाः शब्दा इति, ये त्विन्द्रशक्रपुरन्दरादयः शब्दाः सुरपतिप्रभृतिलक्षणमेकमभिन्नलिङ्गवचनमधिकृत्याभिन्नलिङ्गवचनास्तेषामभिन्नोऽर्थ इत्येकार्थता ५ । तथा [1]सम्—एकीभावेन अभिरोहति—व्युत्पत्तिनिमित्तमास्कन्दति शब्दप्रवृत्तौ यः स समभिरूढः, एष हि पर्यायशब्दानामपि प्रविभक्तमेवार्थमभिमन्यते, यथा घटनाद् घटः, विशिष्टा काचनापि या चेष्टा युवतिमस्तकाद्यारोहणादिलक्षणा सा परमार्थतो घटशब्दवाच्या, तद्वत्यर्थे पुनर्घटशब्दः प्रवर्तते उपचारात्, एवं 'कुट कौटिल्ये' कुटनात् कुटः, अत्र पृथुबुध्नोदरकम्बुग्रीवाद्याकारकौटिल्यं कुटशब्दवाच्यम्, तथा 'उभ उंभ पूरणे' कुः—पृथिवी तस्यां स्थितस्य उम्भनात्—पूरणात्कुम्भः, अत्र यत् पृथिव्यां स्थितस्य पूरणं तत्कुम्भशब्दवाच्यम्, एवं सर्वेषामपि पर्यायशब्दानां नानात्वं प्रतिपद्यते, वदति च—न शब्दान्तराभिधेयं वस्तु द्रव्य पर्यायो वा तदन्यशब्दवाच्यवस्तुरूपतां सङ्क्रामति, न खलु पटशब्दवाच्योऽर्थो जातुचिदपि घटशब्दवाच्यवस्तुरूपतामास्कन्दति तथाऽनुपलम्भात् आस्कन्दने वा वस्तुसाङ्कर्यापत्तिः, तथा च सति सकललोकप्रसिद्धप्रतिनियतविषयप्रवृत्तिनिवृत्त्यादिव्यवहारोच्छेदप्रसङ्गः, ततो घटादिशब्दवाच्यानामर्थानां कुटादिशब्दवाच्यार्थरूपताऽनास्कन्दनान्न कुटादयः शब्दा घटाद्यर्थवाचका इति विभिन्नार्थाः पर्यायशब्दाः, प्रमाणयति च—इह ये ये प्रविभक्तव्युत्पत्तिनिमित्तकाः शब्दास्ते ते [2]भिन्नार्थाः यथा घटपटशकटादिशब्दाः, भिन्नव्युत्पत्तिनिमित्तकाश्च पर्यायशब्दा इति, यत्पुनरविचारित-

१ तुलना-आवश्यक. मलय. वृत्तिः प. ३७६ B त. ॥

२ विभिन्नार्थाः- मु.। आव. मलय. वृत्तावपि भिन्नार्थाः- इति पाठः ॥

प्रतीतिबलादेकार्थाभिधायकत्वं पर्यायशब्दानां [1]प्रतिपाद्यते, तदसमीचीनमतिप्रसङ्गात्, तथाहि—यदि युक्तिरिक्ताऽपि प्रतीतिः शरणीक्रियते तर्हि मन्दमन्दप्रकाशे दवीयसि देशे संनिविष्टमूर्तयो विभिन्ना अपि निम्बकदम्बाश्वत्थकपित्थादय एकतर्वाकारतामाबिभ्राणाः प्रतीतिपथमवतरन्तीत्येकतयैव तेऽभ्युपगन्तव्याः, न चैतदस्ति, विविक्ततत्स्वरूपग्राहिप्रत्यनीकप्रत्ययोपनिपातबाधितत्वेन पूर्वप्रतीते[2]र्विविक्तानामेवैतेषामभ्युपगमात्, [3]एवमन्यत्रापि भावनीयम्, अन्यच्च—शब्दनय ! यदि त्वया परस्परमर्थतो भिन्नत्वाल्लिङ्गवचनभिन्नानां शब्दानां भिन्नार्थता व्यवह्रियते ततः पर्यायशब्दानामपि किं न [4]भिन्नार्थताव्यवहारः क्रियते ?, तेषामपि परस्परमर्थतो भिन्नत्वात्तस्मान्नैकार्थवाचिनः पर्यायध्वनय इति ६ । तथा [5]एवंशब्दः प्रकारवचनः एवं—यथा व्युत्पादितस्तं प्रकारं भूतः—प्राप्त एवम्भूतः शब्दः, तत्समर्थनप्रधानो नयोऽप्येवम्भूतः उपचारात्, अयं हि शब्दमर्थेन विशेषयति, अर्थवशान्नैयत्ये व्यवस्थापयतीति भावः, यथा स एव [6]तत्त्वतो घटशब्दो यश्चेष्टावन्तमर्थं प्रतिपादयति न शेषः, तथा अर्थं शब्देन विशेषयति, शब्दवशात्तच्छब्दवाच्यमर्थं प्रतिनियतं व्यवस्थापयतीति भावः, यथा [7]या घटशब्दवाच्यत्वेन प्रसिद्धा चेष्टा सा घटनात् घट इति व्युत्पत्त्यर्थपरिभावनाबलात् योषिदादिमस्तकारूढस्य घटस्य जलाहरणादिक्रियारूपा द्रष्टव्या न तु स्थानभरणक्रियारूपा, ततश्च [8]यस्मिन्नर्थे शब्दो व्युत्पाद्यते स व्युत्पत्तिनिमित्तमर्थो यदैव स्वरूपतो

१ प्रतिपद्यते-सि.वि ॥ २ ०र्विभक्ता० वि. ॥ ३ एवमत्रापि- इत्यावश्यक० मलय. वृत्तौ पाठः ॥ ४ विभिन्ना० मु० । आव. मलय वृत्तावपि भिन्ना० इति पाठः ॥ ५ तुलना—आव. मलय. वृत्ति. प. ३७८ A ॥
६ तत्त्वात्-सि ॥ ७ वा-इत्याव. मलय वृत्तौ पाठः ॥ ८ तुलना-आव. मलय. वृत्तिः प. ३७८ A ॥

वर्तते तदैव तं शब्दं प्रवर्तमानभिप्रैति न शेषकालम्, यथोदकाद्याहरणवेलायां योषिदादिमस्तकारूढो विशिष्ट-
चेष्टावान् घटो घटशब्दवाच्यो न शेषो घटशब्दव्युत्पत्तिनिमित्तशून्यत्वात् पटादिवत्, तथा घटशब्दोऽपि
तत्त्वतः स एव द्रष्टव्यो यश्चेष्टावन्तमर्थं प्रतिपादयति न शेषः, शेषस्य स्वाभिधेयार्थशून्यत्वात्, [1]एवं
चैष व्युत्पत्ति[2]निमित्तार्थास्तित्वभूषितमेव तात्त्विकं शब्दमभि[3]लपति, य एव पञ्चेन्द्रियत्रिविधबला-
दिरूपान् दशविधान् प्राणान् धारयति स एव नारकादिरूपः सांसारिकः प्राणी जीवशब्दवाच्यो न सिद्धः,
[4]सूत्रोक्तस्वरूपप्राणधारण[5]लक्षणव्युत्पत्तिनिमित्तासम्भवात्, सिद्धस्त्वात्मादिशब्दवाच्यः, अतति-सात-
त्येन गच्छति तांस्तान् ज्ञानदर्शनसुखादिपर्यायानित्याद्यात्मादिशब्दव्युत्पत्तिनिमित्तसम्भवादिति ७ ॥८४७॥
[6]सम्प्रत्येतेषामेव नयानां प्रभेदसङ्ख्यादर्शनार्थमाह—'एक्केक्को य' गाहा, नया मूलभेदापेक्षया यथोक्त-
रूपा नैगमादयः सप्त, एकैकश्च प्रभेदतः शतविधः, ततः [7]सर्वप्रभेदगणनया सप्त नयशतानि भवन्ति, अन्योऽपि
चादेशो—मतान्तरं पञ्चैव शतानि नयानां भवन्तीति, तथाहि—शब्दसमभिरूढैवम्भूतानां त्रयाणामपि नयानां
शब्दपरत्वेनैकत्वविवक्षणात् पञ्चैव मूलनयाः, प्रत्येकं च शतप्रभेदत्वे पञ्च शतानीति, [8]अपिशब्दात् षट्
[9]चत्वारि शतानि द्वे वा शते, तत्र षट् शतान्येवं—नैगमः सामान्यग्राही सङ्ग्रहे प्रविष्टो विशेषग्राही तु

१ तुलना- आव. मलय वृत्तिः प ३७७ B ॥ २ ०निमित्तमर्था ० वि. ॥ ३ ०लक्षन्-जे. ॥ ४ तत्रो० इत्याव. मलय. वृत्तौ पाठः ॥ ५ ०लक्षण० सि. वि. नास्ति ॥ ६ सम्प्रत्येषामेव-सि. वि. । तुलना-आव मलय वृत्तिः प ३८२ A ॥ ७ सर्वभेद० मु. । प्रभेद० सि. वि. । सर्वप्रभेद० इत्याव मलय. वृत्तौ पाठः ॥ ८ अपिशब्दत्वात्-सि. वि. ॥ ९ शतानि-सि. वि. आव. मलय. वृत्तौ च नास्ति ॥

व्यवहारे, ततः षडेव मूलनयाः, एकैकश्च प्रभेदतः शतभेद इति षट् शतानि, तथा सङ्ग्रहव्यवहारऋजुसूत्र-शब्दा इति चत्वार एव मूलनयाः एकैकश्च शतविध इति चत्वारि शतानि, शतद्वयं तु नैगमादीनां ऋजु-सूत्रपर्यन्तानां चतुर्णां द्रव्यास्तिकत्वात् शब्दादीनां तु त्रयाणां पर्यायास्तिकत्वात्तयोश्च प्रत्येकं शतभेदत्वात्, अथवा यावन्तो वचनपथास्तावन्तो नया इत्यसङ्ख्याताः प्रतिपत्तव्याः ८४८॥ १२४॥

इदानीं 'वत्थग्गहणविहाणं' ति पञ्चविंशत्युत्तरं शततमं द्वारमाह—

जन्न तयट्ठा कीयं [1]नेव वुयं [2]नेव गहियमन्नेसिं ।
आहडपामिच्चं चिय कप्पए साहुणो वत्थं ॥८४९॥
अंजणखंजणकद्दमलित्ते, मूसगभक्खिय अग्गिविदड्ढे ।
[3]उन्निय कुट्टिय पज्जवलीढे, होइ विवागो [4]सुहो असुहो वा ॥८५०॥
नवभागकए वत्थे चउरो कोणा य दुन्नि अंता य ।
दो कन्नावट्टीउ मज्झे वत्थस्स एक्कं तु ॥८५१॥
चत्तारि देवया भागा, दुवे भागा य माणुसा ।
आसुरा य दुवे भागा, एगो पुण जाण रक्खसो ॥८५२॥

१ नेय-जे. २. ता. ॥ २ जं न- मु. । जन्न-इति विचारसारे पाठः ॥ ३ तुन्निय-इति बृ. क-भाष्ये निशीथभाष्ये विचार-सारे, धर्म सं. वृत्तौ भा. २ प. ४६ च पाठः ॥ ४ सुह-मु. ॥

गाथा ८४१-८५३ प्र. आ. २४७

देवेसु उत्तमो लाभो, माणुसेसु य मज्झिमो ।
आसुरेसु य गेलन्नं, मरणं जाण रक्खसे ॥८५३॥

[बृ.क. भाष्य २८३२-३१-३३-३४, निशीथभाष्य ५०८७-८६-८८ ८९, विचारसार ३२६-९]

'जन्न तयट्ठा' गाहा, इह [1]तावद्वस्त्रमेकेन्द्रिय-विकलेन्द्रिय-पञ्चेन्द्रियावयवनिश्पत्तिभेदात् त्रिधा भवति, तत्र एकेन्द्रियावयवनिष्पन्नं कार्पासिकादि, विकलेन्द्रियावयवनिश्पन्नं कौशेयकादि ❋ एतच्च कारण एव गृह्यते,❋ पञ्चेन्द्रियावयवनिष्पन्नं और्णिकादि । पुनरेकैकं त्रिधा—यथाकृता-ऽल्पपरिकर्म-बहुपरिकर्म-भेदात् । तत्र यानि परिकर्मरहितान्येव तथास्वरूपाणि लभ्यन्ते तानि यथाकृतानि । यानि चैकवारं खण्डयित्वा सीवितानि तान्यल्पपरिकर्माणि । यानि पुनर्बहुधा खण्डत्वा सीवितानि तानि बहुपरिकर्माणि । इह च यान्यल्पपरिकर्माणि वस्त्राणि तानि बहुपरिकर्मवस्त्रापेक्षया स्तोकसंयमव्याघातकारीणीत्यतस्तदपेक्षया शुद्धानि, तेभ्योऽपि यथाकृतान्यतिशुद्धानि, मनागपि पलिमन्थादिदोषकारित्वाभावात् । ततो गृहद्भिः पूर्वं यथाकृतानि ग्राह्याणि, तदलाभे चाल्पपरिकर्माणि, तेषामप्यभावे बहुपरिकर्माण्यपि वस्त्राणि ग्राह्याणीति ।

एतच्च सर्वमपि वस्त्रं गच्छवासिभिः कल्पनीयमेव ग्राह्यम् । तच्चैवं—यद्वस्त्रं न तदर्थं—व्रतिनिमित्तं क्रीतम्, यच्च नैव व्रतिनिमित्तं 'वुयं'ति अन्तर्भूतण्यर्थत्वात् वायितम्, यच्च नैव गृहीतमन्येषां सम्बन्धि, अनिच्छतोऽपि पुत्रादेः सकाशात् साधुदानाय बलाद्यन्न गृहीतमिति भावः, एवंविधं वस्त्रम् । तथा अभ्याहृतमपमित्यकं च त्यक्त्वा शेषं साधोः कल्पत इति । [2]तत्र अभ्याहृतं द्वेधा—परग्रामाभ्याहृतं स्वग्रामाभ्याहृतं ॥ ९० ॥

१ तुलना—धर्मसं वृत्तिः भा. २, प. ४८ तः॥ ❋❋चिह्नद्वयमध्यवर्ती पाठः सि प्रतौ नास्ति ॥ २ अत्र-सि. ॥

च । परग्रामाभ्याहृतं यदन्यस्माद् ग्रामादेः साधुनिमित्तमानीतम् । स्वग्रामाभ्याहृतं हट्टादिभ्यो यद् व्रतिभिरदृष्टं यतिनिमित्तमेव गृहे समानीतम्, व्रतिदृष्टं तु हट्टादिभ्योऽप्यानीतं गृहादिषु यतीनां ग्रहीतुं कल्पत इति । तथा अपमित्यकम्—उद्धारकेणान्यस्माद् गृहीत्वा यद्ददाति । दोषाश्चात्रापि पिण्डवद्वाच्या इति । अपरं च—अत्राप्यविशोधिकोटिविशोधिकोटिद्वयं ज्ञातव्यम्, तत्र मूलतो यत्यर्थं वायनादिकं वस्त्रस्याविशोधिकोटिः, प्रक्षालनादिकं च यत्यर्थं क्रियमाणं विशोधिकोटिः । इदं च वस्त्रं यदा कल्पनीयमित्यवसितं भवति तदा द्वयोरप्यन्तयोर्गृहीत्वा सर्वतो निरीक्षणीयम्, मा तत्र गृहिणां मणिर्वा सुवर्णं वा अन्यद्वा रूपकादिद्रव्यं निबद्धं स्यात् । ततः सोऽपि गृहस्थो भण्यते—निरीक्षस्व एतद्वस्त्रं सर्वतः । एवं च यदि तेन मण्यादि दृष्टं ततो गृहीतम् । अथ न दृष्टं ततः साधुरेव दर्शयति एनमपनयेति । आह—गृहिणः कथिते कथमधिकरणं न भवति ?, उच्यते, कथिते स्तोकतर एव दोषः, अकथिते तु महानुड्डाहादिः स्यादिति ॥

अथ यादृशे वस्त्रे लब्धे शुभं भवति यादृशे चाशुभं भवतीत्येतदाह—'अंजणे' त्यादि [1]वृत्तम्, अञ्जनं—सौवीराञ्जनप्रभृतिकं ※ तैलकज्जलाञ्जनप्रभृति ※ वा खञ्जनं-दीपमलः, कर्दमः-पङ्कस्तैर्लिप्ते—खरण्टिते वस्त्रे, तथा मूषकैरुपलक्षणत्वात्कंसारिकादिभिश्च भक्षिते, तथाऽग्निना विशेषेण दग्धे तथा तुण्णिते तुन्नकारेण स्वकलाकौशलतः पूरितच्छिद्रे, तथा कुट्टिते—रजककुट्टनेन पतितच्छिद्रे, तथा पर्यवैः—पुराणादिभिः पर्यायैर्लीढे—युक्ते, अतिजीर्णतया कुत्सितवर्णान्तरादिसंयुक्ते इत्यर्थः, एवंविधे वस्त्रे गृहीते सति भवति विपाकः—



१ वृत्तम्-मु॰ नास्ति ॥ ※※ चिह्नद्वयमध्यवर्ती पाठः जे॰ सि॰ नास्ति ॥

परिणामः शुभोऽशुभो वा । इयमत्र भावना—गृहीतस्य वस्त्रस्य नव भागाः कल्प्यन्ते । तत्र च केषुचि[1]द्भागेषु अञ्जन-खञ्जनादिके सति शुभं फलमुपजायते [2]केषुचित्पुनरशुभमिति ॥८५०॥

अथ तानेव [3]भागानाह—'नवभाग०'गाहा, कल्पनया नवभिर्भागैः कृते वस्त्रे एते नव भागा विज्ञेयाः, यथा—चत्वारः कोणकास्तथा द्वावन्तौ ययोर्दशिका भवन्ति, तथा द्वे कर्णपट्टिके, मध्ये च वस्त्रस्यैको भागः ॥८५१॥

सम्प्रत्येतेषामेव विभागानां क्रमेण स्वामिन आह—'चत्तारो' त्यादिश्लोकः चत्वारः कोणकरूपा भागा दैव्या—देवसम्बन्धिनः । द्वावन्त्यौ दशिकासम्बद्धौ भागौ मानुषौ—मनुष्यस्वामिकौ । द्वौ च [4]भागौ—कर्णपट्टिकालक्षणौ आसुरौ—असुरसम्बन्धिनौ । सर्वमध्यगतः पुनरेको भागो राक्षसो—राक्षससम्बन्धीत्येवं क्रमेण नवानामपि विभागानां स्वामिनो जानीहीति ॥८५२॥

अथैतेषु भागेषु अञ्जनादिसद्भावे प्रशस्ताप्रशस्तं फलमाह—'देवेसु' इत्यादि, दैव्येषु भागेषु यद्यञ्जनादिभिर्दूषितं वस्त्रं भवेत्तदा तस्मिन् गृहीते यतिजनस्य उत्तमो लाभो भवेद्वस्त्रपात्रादीनाम्, तथा मानुषभागयोरञ्जनादिभिः दूषिते वस्त्रे मुनीनां मध्यमो लाभः सम्पद्यते । तथा आसुरभागयोरञ्जनादिभिः दूषिते वस्त्रे गृह्यमाणे ग्लानत्वं व्रतिनां जायते । [5]राक्षसभागे पुनरञ्जनादिदूषिते जानीहि यतीनां मरणमिति ॥८५३॥१२५॥



१ ०द्विभागे० सि. ॥ २ केनचि० सि. ॥ ३ विभागा० सि. ॥ ४ विभागौ-मु. ॥ ५ राक्षसे—सि. ॥

साम्प्रतं 'ववहारा [1]पंच' त्ति षड्विंशत्युत्तरशततमं द्वारमाह—

आगम १ सुय २ आणा ३ धारणा ४ य जीए ५ य पंच ववहारा ।
केवल १ मणो २ हि ३ चउदस ४ दस ५ नवपुव्वाइ ६ पढमोऽत्थ ॥८५४॥
कहेहि सव्वं जो वुत्तो, जाणमाणोऽवि गूहइ ।
न तस्स दिंति पच्छित्तं, बिंति अन्नत्थ सोहय ॥८५५॥
न संभरे य जे दोसे, सब्भावा न य मायओ ।
पच्चक्खी साहए ते उ, माइणो उ न साहए १ ॥८५६॥
आयारपकप्पाई सेसं सव्वं सुयं विणिदिट्ठं २ ।
देसंतरट्ठियाण गूढपयालोयणा आणा ३ ॥८५७॥
गीयत्थेणं दिन्नं सुद्धिं अवहारिऊण तह चेव ।
दिंतस्स धारणा तह उद्धियपयधरणरूवा वा ४ ॥८५८॥
दव्वाइ चिंतिऊणं संघयणाईण हाणिमासज्ज ।
पायच्छित्तं जीयं रूढं वा जं जहिं गच्छे ५ ॥८५९॥

'आगमे'त्यादि, व्यवह्रियन्ते जीवादयोऽनेनेति व्यवहारः, अथवा व्यवहरणं व्यवहारो—मुमुक्षु-प्रवृत्तिनिवृत्तिरूपः, तत्कारणत्वाद् ज्ञानविशेषा अपि व्यवहारः । स च पञ्चप्रकारस्तद्यथा—आगम्यन्ते—परि-

[1] पचेव त्ति-मु. ॥

च्छिद्यन्ते पदार्था अनेनेत्यागमः १, श्रवणं श्रूयते इति वा श्रुतम् २, आज्ञाप्यते–आदिश्यते इत्याज्ञा ३, धरणं–धारणा ४, जीयत इति जीतम् ५। तत्र प्रथमः– [1]आगमव्यवहारः षड्विधः, कस्क इत्याह–केवलज्ञानम्, 'मणोहि' त्ति 'पदैकदेशे पदसमुदायोपचारात्' मनःपर्यायज्ञानम्; अवधिज्ञानम् '**चउदस दस नव पुव्वाइं**' ति पूर्वशब्दः प्रत्येकमभिसम्बध्यते चतुर्दश पूर्वाणि दश पूर्वाणि नव पूर्वाणि च, एष सर्वोऽप्यागमव्यवहार उच्यते इति। इह च यदि केवलि प्राप्यते तदा तस्यैवालोचना दीयते, तदभावे मनःपर्यायज्ञानिनः तस्याप्यभावेऽवधिज्ञानिनः इत्यादि यथाक्रमं वाच्यम् ॥८५४॥

तत्र केवल्यादिरागमव्यवहारी स्वयमपि तावत्सर्वं जानीत्येव ततोऽतिचारजातं शिष्यस्य स्वयमपि प्रकटीकृत्य प्रायश्चित्तं ददाति अन्यथा वेत्याशङ्क्य प्रासङ्गिकं [2]तावदाह–'**कहेहि**' त्यादिश्लोकद्वयम्, कथय सर्वं दोषजातमिति आगमव्यवहारिणा प्रोक्तो यः शिष्यो जानानोऽपि स्वदोषान् मायावितया गूहति–गोपायति न तस्मै–मायाविने प्रायश्चित्तं ददति आगमव्यवहारिणः, किन्तु ब्रुवते–'**अन्यत्र**' अन्यस्य समीपे गत्वा शोधय–शोधिं गृहाण ॥८५५॥

यस्तु सद्भावतः एव दोषान् कांश्चिन्न स्मरति न पुनर्मायया तस्य तान् दोषान् प्रत्यक्षी–प्रत्यक्षज्ञानी आगमव्यवहारीत्यर्थः '**साहए**' त्ति कथयति, मायाविनस्तु न कथयतीति। एतदुक्तं भवति–आगमव्यवहारी यदि [3]केवलज्ञानादिबलेनैतज्जानाति यथैष भणितः सन् शुद्धभावत्वात् सम्यक्प्रतिपत्स्यते इति तदा स्मारयति, यथाऽमुकं तवालोचनीयं विस्मृतं ततस्तदप्यालोचयेति। यदि पुनरेतदवगच्छति यथैष

१ तुलना-जीतकल्पचूर्णिः प. २ तः॥ २ तदेवाह-सि.॥ ३ तुलना-व्यवहारवृत्तिः भा. २, प. ४३॥

भणितोऽपि सन् मायावितया न सम्यक्प्रतिपत्स्यते इति तदा तमप्रतिपत्स्यमानं नैव स्मारयति निष्फलत्वात् । अमूढलक्षो हि भगवानागमव्यवहारी, अत एव दत्तायामप्यालोचनायां यद्यालोचकः सम्यगावृत्तो ज्ञातस्ततस्तस्मै प्रायश्चित्तं प्रयच्छति । अथ न प्रत्यावृत्तस्ततो न प्रयच्छतीति ।

ननु चतुर्दशपूर्वधरादेः कथं प्रत्यक्षज्ञानित्वम्? तस्य श्रुतज्ञानित्वेन परोक्षज्ञानित्वात् । उच्यते, चतुर्दशादिपूर्वबलसमुत्थस्यापि ज्ञानस्य प्रत्यक्षतुल्यत्वात्, तथाहि—येन यथा योऽतिचारः कृतस्तं तथा सर्वमेते जानन्तीति । अथ यदि आगमव्यवहारिणः सर्वभावविषयं परिज्ञानं ततः कस्मात्तस्य पुरत आलोच्यते?, किन्तु तस्य समीपमुपगम्य वक्तव्यमपराधं मे भवन्तो जानते तस्य शोधिं प्रयच्छतेति । उच्यते, आलोचिते बहुगुणसम्भवतः सम्यगाराधना [1]भवति । तथाहि—आलोचनाऽऽचार्येण स आलोचकः प्रोत्साह्यते, यथा वत्स! [2]त्वं धन्यस्त्वं च भाग्यवान् यदेवं मानं निहत्यात्महितार्थतया स्वरहस्यानि प्रकटयसि, महादुष्करमेतत्, एवं स प्रोत्साहितः सन् प्रवर्धमानपरिणामः सम्यग् निःशल्यो भूत्वा यथावस्थितमालोचयति शोधिं च सम्यक्प्रतिपद्यते, ततः पर्यन्ते आराधना, स्तोककालेन च मोक्षगमनमिति ॥८५६॥

अथ श्रुतव्यवहारमाह—**आयारे**' त्यादिगाथापूर्वार्द्धम्, आचारप्रकल्पो—**निशीथ**स्तदादिकं कल्पव्यवहारदशाश्रुतस्कन्धप्रभृतिकम्, एकादशाङ्गावशेषपूर्वप्रमुखं च शेषं श्रुतं—सर्वमपि श्रुतव्यवहारः । नवादिपूर्वाणां श्रुतत्वाविशेषेऽप्यतीन्द्रियार्थेषु विशिष्टज्ञानहेतुत्वेन सातिशयत्वात् केवलादि[3]वदागमत्वेनैव

१ भावना भवति-सि. ॥ २ त्वं·भाग्यवान्-मु. । धन्यस्त्वं भाग्यभाग्-जे. ॥ ३ ०तदा० सि. ॥

व्यपदेशः । एते च श्रुतव्यवहारिणः स्फुटतरोपलब्धिनिमित्तं [1]त्रीन् वारानालोचनार्हमालोचापयन्ति, ते ह्येकं द्वौ वा वारावालोचिते अनेन सम्यगालोचितमसम्यग्वेति विशेषं नावगच्छन्तीति, कथमालोचापयन्तीति चेदुच्यते, प्रथमवेलायां निद्रायमाण इव शृणोति, ततो ब्रूते–निद्राप्रमादं गतवानहमिति न [2]मयाऽधुनाऽवधारितमनुपयोगक्रिमप्यश्रौपमतो भूयोऽप्यालोचय, द्वितीयवारमालोचिते भणति–न सुष्ठु भानादतः पुनरप्यालोचय, एवं त्रिष्वपि वारेषु यदि सदृशार्थमालोचितं ततो ज्ञातव्यमेषोऽमायावी, अथ विसदृशं तर्हि ज्ञातव्यमेष परिणामतः कुटिल इति । एवं च सति तस्यापि प्रत्यय उपजायते यथाऽहं विसदृशभणनेन मायावी लक्षित इति । ततो मायानिष्पन्नं प्रायश्चित्तं पूर्वं दातव्यं तदनन्तरमपराधनिमित्तमिति ।

अथ आज्ञाव्यवहारमाह–'देसंतरे'त्यादिगाथोत्तरार्द्धम् , देशान्तरस्थितयोर्द्वयोर्गीतार्थयोर्गूढपदैरालोचना–निजातिचारनिवेदनमाज्ञाव्यवहारः, एतदुक्तं भवति–यदा द्वावप्याचार्यावासेवितसूत्रार्थतया[3] गीतार्थौ क्षीणजङ्घाबलौ विहारक्रमानुरोधतो दूरतरदेशान्तरव्यवस्थितौ, अत एव परस्परस्य समीपं गन्तुमसमर्थावाभूताम्, तदाऽन्यतरः प्रायश्चित्ते समापतिते सति तथाविधयोग्यगीतार्थशिष्याभावे सति मतिधारणाकुशलमगीतार्थमपि शिष्यं समयभाषया गूढार्थान्यतीचारासेवनपदानि कथयित्वा प्रेषयति । तेन च गत्वा गूढपदेषु कथितेषु स आचार्यो द्रव्य-क्षेत्र-काल-भाव-संहनन-धृति-बलादिकं परिभाव्य स्वयं वा तत्र गमनं करोति शिष्यं वा तथाविधं योग्यं गीतार्थं प्रज्ञाप्य प्रेषयति, तदभावे तस्यैव प्रेषितस्य गूढार्थामतिचारशुद्धिं कथयतीति ॥ ८५७ ॥



१ तुलना-व्यवहारवृत्तिः भा. २, गा. १२७ ॥ २ मयानुधारित० सि. ॥ ३ ०याऽतिगी०सि. ॥

अथ धारणाव्यवहारमाह–'गीयत्थे'त्यादि, इह गीतार्थेन संविग्नेनाचार्येण कस्यापि शिष्यस्य क्वचिदपराधे द्रव्य क्षेत्र-काल-भावपुरुषान् प्रतिसेवनाश्चावलोक्य या शुद्धिः प्रदत्ता तां शुद्धिं तथैवावधार्य सोऽपि शिष्यो यदाऽन्यत्रापि तादृश एवापराधे तेष्वेव द्रव्यादिषु तथैव प्रायश्चित्तं ददाति तदाऽसौ धारणानाम चतुर्थो व्यवहारः, [1]उद्धृतपदधरणरूपा वा धारणा, इदमुक्तं भवति–वैयावृत्त्यकरणादिना कश्चिद्गच्छोपकारी साधुरद्याप्यशेषच्छेदश्रुतयोग्यो न भवति ततस्तस्यानुग्रहं कृत्वा यदा गुरुरुद्धृतान्येव कानिचित्प्रायश्चित्तपदानि कथयति तदा तस्य तेषां पदानां धरणं धारणाऽभिधीयते इति ॥ ८५८ ॥

अथ जीतव्यवहारमाह—'दव्वाई'त्यादि, येष्वपराधेषु पूर्वमहर्षयो बहुना तपःप्रकारेण शुद्धिं कृतवन्तस्तेष्वप्यपराधेषु साम्प्रतं द्रव्य-क्षेत्र-काल-भावान् विचिन्त्य संहनन धृति-बलादीनां च हानिमासाद्य समुचितेन केनचित्तपःप्रकारेण यां गीतार्थाः शुद्धिं निर्दिशन्ति तत्समयपरिभाषया जीतमुच्यते, अथवा यत्प्रायश्चित्तं यस्याचार्यस्य गच्छे सूत्रातिरिक्तं कारणतः प्रवर्तितमन्यैश्च बहुभिरनुवर्तितं तत्तत्र रूढं जीतमुच्यते, तदेवमेतेषां पञ्चानां व्यवहाराणामन्यतरेणापि व्यवहारेण युक्त एव प्रायश्चित्तप्रदाने गीतार्थो गुरुरधिक्रियते न त्वगीतार्थः, । अनेकदोषसम्भवात् उक्तं च—

△'अग्गीओ न वियाणइ सोहिं चरणस्स देइ ऊणऽहियं । तो अप्पाणं आलोयगं च पाडेइ संसारे ॥१॥'
[श्राद्धजितकल्प. गा. २०] इति ॥८५९॥१२६॥

---

१ उद्धृतपदधा०-मु. ॥ △अगीतार्थो न विजानीते चरणस्य शोधिं ददात्यूनामधिकां वा । तत आत्मानमालोचकं च पातयति संसारे ॥

इदानीं 'पंच 'अहाजाय' त्ति सप्तविंशत्युत्तरशततमं द्वारमाह—

पंच अहाजायाइ[1] चोलगपट्टो १ तहेव रयहरणं २ ।
उन्निय ३ खोमिय ४ निस्सेज्जजुयलयं तह य मुहपोत्ती ५ ॥८६०॥

गाथा ८६०
प्र. आ. २५०

पंच अहा०' गाहा, चोलपट्टस्तथा रजोहरणं तथा [2]और्णिक-क्षौमनिषद्यायुगलकं तथा मुखपोतिका एतानि पञ्च यथाजातानि । यथाजातं—जन्म तच्च श्रमणत्वमाश्रित्य द्रष्टव्यम्, चोलपट्टादिमात्रोपकरणयुक्त एव हि श्रमणो जायते, अतस्तद्योगादेतान्यपि यथाजातान्युच्यन्ते । तत्र चोलपट्टः प्रतीत एव, बाह्या-ऽभ्यन्तरनिषद्या[3]द्वयरहितमेकनिषद्यं सदशं रजोहरणम् । इह किल सम्प्रति दशिकाभिः सह [4]या दण्डिका क्रियते सा सूत्रनीत्या केवलैव भवति न सहदशिका, तस्याश्च निषद्यात्रयम्, तत्र या दण्डिकाया उपरि तिर्यग्वेष्टकत्रयप्रमाणपृथुत्वा एकहस्तायामा कम्बलीखण्डरूपा सा आद्या निषद्या, तस्याश्चाग्रे हस्तत्रिभागायामा दशिकाः सम्बद्ध्यन्ते, एषा च निषद्या [5]दशिकाकलिताऽत्र रजोहरणशब्देन गृह्यते उक्तं च—
※"एगनिसेज्जं च रयहरणं" [ ]इति द्वितीया त्वेनामेव निषद्यां तिर्यग्बहुभिर्वेष्टकैरावेष्टयन्ती किञ्चिदधिकहस्तप्रमाणायामा हस्तप्रमाणमात्रपृथुत्वा [6]वस्त्रमयी निषद्या सा अभ्यन्तरनिषद्या, इयं च क्षौमिकनिषद्याग्रहणेनेह गृह्यते, तृतीया तु तस्या एवाभ्यन्तरनिषद्यायाः तिर्यग्वेष्टकान् बहून् कुर्वन्ती चतुरङ्गुलाधिकैकहस्तमाना चतुरस्रा कम्बलमयी भवति । सा चोपवेशनोपकारित्वादधुना पादप्रोञ्छनकमिति रूढा । इयं बाह्या

---

१ तहा आहा० ता. ॥ २ ऊर्णिकाक्षौमिकनि० सि. ॥ ३ ॰द्वयसहित० सि. ॥ ४ या च द० सि. ॥
५ दशिका० सि. नास्ति ॥ ※ एकनिषद्यावच्च रजोहरणम् ॥ ६ तन्तुमयी—जे ॥

निषद्येत्यभिधीयते, अस्यास्त्विह औणिंकनिपद्याग्रहणेन ग्रहणमिति । तथा मुखपिधानाय पोतं—वस्त्रं मुखपोतम् , मुखपोतमेव ह्रस्वं चतुरङ्गुलाधिकवितस्तिमात्रप्रमाणत्वान्मुखपोतिका मुखवस्त्रिकेत्यर्थः । 'अतिवर्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानि' [ ] इति वचनाच्च प्रथमतो नपुंसकत्वेऽपि कप्रत्यये समानीते स्त्रीत्वमिति ॥८६०॥१२७॥

इदानीं '**निसिजागरणविहि**' त्ति अष्टाविंशत्युत्तरशततमं द्वारमाह—

**सव्वेऽवि पढमयामे दोन्नि य वसहाण आइमा जामा ।**
**तइओ होइ गुरूणं चउत्थ सव्वे गुरू सुयइ ॥८६१॥** [ तुलना-ओघनि. ६६० ]

'**सव्वेवि**' **गाहा**, सर्वेऽपि साधवः प्रथमयामे-रात्रेः प्रथमं प्रहरं यावत् स्वाध्याया-ऽध्ययनादि कुर्वाणा जाग्रति, द्वौ च आद्यौ यामौ वृषभाणाम् , वृषभा इव वृषभा—गीतार्थाः साधवस्तेषाम् , अयमर्थः—द्वितीये यामे ये सूत्रवन्तः साधवस्ते स्वपन्ति, वृषभास्तु जाग्रति, ते च जाग्रतः **प्रज्ञापनादि**सूत्रार्थं परावर्तयन्ति । तृतीयः प्रहरो भवति गुरूणाम् , कोऽर्थः ?—प्रहरद्वयानन्तरं वृषभाः स्वपन्ति गुरवस्तूत्थिताः **प्रज्ञापनादि** गुणयन्ति चतुर्थं प्रहरं यावत् । चतुर्थे च प्रहरे सर्वेऽपि साधवः समुत्थाय वैरात्रिकं कालं गृहीत्वा-कालिकश्रुतं परावर्तयन्ति । [1]गुरवः पुनः स्वपन्ति, अन्यथा प्रातर्निद्राघूर्णमानलोचनास्तद्वशादेव च भज्यमानपृष्ठका व्याख्यानभव्यजनोपदेशादिकं कर्तुं ते सोद्यमाः सन्तो न शक्नुवन्तीति ॥८६१॥ १२८॥

१ गुरु पुनः स्वपिति-मु. ॥

इदानीम् 'आलोयणदायगन्नेस' त्येकोनत्रिंशदुत्तरशततमं द्वारमाह—

**सल्लुद्धरणनिमित्तं गीयस्सऽन्नेसणा उ उक्कोसा ।**
**जोयणसयाइं सत्त उ बारस वासाइं कायव्वा ॥८६२॥** [पञ्चाशक-१५।४१]

'सल्लुद्धरण०' गाहा, 'शल्योद्धरणनिमित्तम्, आलोचनार्थं 'गीतस्य' गीतार्थस्य गुरोन्वेषणा – [1]गवेषणा, तुः पुनरर्थे, उत्कृष्टा क्षेत्रतः सप्तैव योजनशतानि यावत्कर्तव्या, कालतस्तु द्वादश वर्षाणि यावदिति । अयमर्थः–संनिहित एव गीतार्थो [2]गुरुः यदि न लभ्यते तदा योजनशत [3]सप्तकप्रमाणक्षेत्रेऽसावुत्कृष्टतोऽन्वेपणीयः, कालतस्तु द्वादश वर्षाणि यावत्समागच्छन् प्रतीक्षणीय इति । नन्वेतावति क्षेत्रे तदन्वेषणार्थं पर्यटन्नेतावन्तं च कालं [4]समागच्छन्तं प्रतीक्षमाणः स यदि अन्तरालेऽप्रदत्तालोचनोऽपि म्रियते तदा किमयमाराधको न वेति ?, उच्यते, आलोचनां दातुं सम्यक्परिणतोऽन्तराऽपि म्रियमाणोऽयमाराधक एव, विशुद्धाध्यवसायसम्पन्नत्वात्, उक्तं च—

※"आलोयणापरिणओ सम्मं संपट्ठिओ गुरुसयासे । जइ अंतरावि कालं करेज्ज आराहओ तहवि ॥१॥

अथैवमन्वेपणेऽपि सकलोक्तगुणगुरुर्गुरुर्न प्राप्यते तदा संविग्नगीतार्थमात्रस्याप्यालोचना दातव्या । [5]यत श्रूयते–अपवादतो गीतार्थसंविग्नपाक्षिकसिद्धपुत्रप्रवचनदेवतानामलाभे सिद्धानामप्यालोचना देया, सशल्यमरणस्य संसारकारणत्वात् इति । आह च–

---

१ गवेषणा-मु॰ नास्ति ॥ २ गुरुः-मु नास्ति ॥ ३ सप्त प्र॰ मु॰ । ४ तमा॰ मु ॥ ५ तु॰–पञ्चाशकवृत्तिः प॰ २४८ ॥
※ [श्राद्धजित॰ गा॰३६] आलोचनापरिणतः सम्यक् संप्रस्थितो गुरुसकाशे । यद्यन्तराऽपि कालं कुर्यात् तथाप्याराधकः ॥

*" [1]संविग्गे गीयत्थे असई पासत्थमाइसारूवी" [ ] त्ति ॥८६२॥ १२९॥

सम्प्रति '**गुरुपमुहाणं कीरइ असुद्धसुद्धेहिं जत्तियं कालं ।**' इति त्रिंशदुत्तरशततमं द्वारमाह—

**जावज्जीवं गुरुणो [2]असुद्धसुद्धेहिं वावि कायव्वं ।**
**वसहे बारस वासा अट्ठारस भिक्खुणो मासा ॥८६३॥**

'**जावज्जीवं**' गाहा, यावज्जीवमाजन्मापीत्यर्थः, गुरोः—आचार्यस्य, शुद्धैः—आधाकर्मादिदोषादूषितैरशुद्धैर्वाऽपि—आधाकर्मादिदोषयुक्तैर्वा-ऽपि अशन-पान-भैषजादिभिः कर्तव्यं प्रतिजागरणमिति शेषः । अयमर्थः-शुद्धैरशुद्धैश्च ते यावज्जीवमपि [3]प्रतिजागरणीयाः साधुश्रावकलोकेन, सर्वस्यापि च गच्छस्य तदधीनत्वात् यथाशक्ति निरन्तरं सूत्रा-ऽर्थनिर्णयप्रवृत्तेश्च । तथा वृषभे—उपाध्यायादिके द्वादश वर्षाणि यावत् प्रतिजागरणा शुद्धैरशुद्धैर्वस्तुभिश्च विधेया । ततः परं शक्तौ भक्तविवेकः । एतावता कालेनान्यस्यापि समस्तगच्छभारोद्वहनसमर्थस्य वृषभस्य उत्थानात् । तथा अष्टादश मासान् यावद्भिक्षोः—सामान्यसाधोः शुद्धैरशुद्धैः प्रतिजागरणा विधेया, ततः परमसाध्यतया शक्तौ सत्यां भक्तविवेकस्यैव कर्तुमुचितत्वात् । इदं च शुद्धा-ऽशुद्धाशनादिभिराचार्यादीनां परिपालनं रोगाद्यभिभूतवपुषां क्षेत्र—कालादेः परिहाणिवशतो भक्ताद्यलाभवतां च विधेया(यं) न पुनरेवमेव सुस्थावस्थायामिति । **व्यवहारभाष्ये** तु सर्वसामान्यग्लानप्रक्रियाव्यवस्थार्थमियं गाथा लिखिताऽस्ति, यथा—

* संविग्ने गीतार्थे असति पार्श्वस्थादयः सरूप्यन्ताः इति ॥ १ संविग्गो-सि. ॥ २ सुद्धअसुद्धेहिं-ता. । तुलना-धर्मस. वृत्तिः भा.२ । प. १७७ ॥ ३ प्रतिजागरीयाः-सि. ॥

"छम्मासे आयरिओ कुलं [1]तु संवच्छराईं तिन्नि भवे । संवच्छरं गणो खलु जावज्जीवं भवे संघो ॥ १ ॥"

[तुलना —बृ. क. भा. २००१]

अस्या व्याख्या— [2]प्रथमत आचार्यः षड् मासान् यावच्चिकित्सां ग्लानस्य कारयति । तथाप्यप्रगुणीभूतं तं कुलस्य समर्पयति । ततः कुलं त्रीन् संवत्सरान् यावच्चिकित्सकं भवति । तथाप्यप्रगुणीभवने कुलं गणस्य तं समर्पयति । तदनन्तरं संवत्सरं यावद्गणः खलु चिकित्सां कारयति । तथाप्यनिवर्तितरोगे तं गणः सङ्घस्य समर्पयति । ततः सङ्घो यावज्जीवं–प्रासुकप्रत्यवतारेण तदभावे चाप्रासुकेनापि यावज्जीवं चिकित्सको भवति । एतच्चोक्तं भक्तविवेकं कर्तुमशक्नुवतः, यः पुनर्भक्तविवेकं कर्तुं शक्नोति तेन प्रथमतोऽष्टादश मासान् चिकित्सा कारयितव्या, विरतिसहितस्य जीवितस्य पुनः संसारे दुष्प्रापत्वात्, तदनन्तरं चेत्प्रगुणीभवति ततः सुन्दरम्, अथ न भवति तर्हि भक्तविवेकः कर्तव्य इति ॥८६३॥ १३०॥

इदानीम् 'उवहिधोयणकालो' त्ति एकत्रिंशदुत्तरशततमं द्वारमाह—

अप्पत्ते च्चिय वासे सव्वं उवहिं धुवंति जयणाए ।
असईए उदगस्स उ जहन्नओ पायनिज्जोगो ॥८६४॥
आयरियगिलाणाण मइला मइला पुणोवि धोइज्जा ।
मा हु गुरूण [3]अवण्णो लोगम्मि अजीरणं इअरे ॥८६५॥

[पिण्डनि. २६-२७, ओघनि. ३५१-२]

१ च- सि. धर्मसं.वृत्तौ च ॥ २ तुलना- बृहत्कल्प भा.वृत्तिःपृ. ५७६ ॥ ३ मवन्नो-ता. ॥

णामः । तृतीयः पुनः प्राह--किमेतया महाशाखया छिन्नया ?, तदेकदेशभूताः प्रशाखा एव कर्तयामः ।' इत्येवंविधः कापोतलेश्यापरिणामः । चतुर्थश्चोवाच--'किमाभिरपि वराकीभिः कर्तिताभिः ?, तत्पर्यन्तवर्तिनः कांश्चिद्गुच्छानेव छिन्नः ।' एष तैजसलेश्यापरिणामः । पञ्चमः पुनः प्रोवाच--'गुच्छैरपि किं नश्छिन्नैः ?, तन्मध्यात्सुपक्वानि भक्षणोचितानि कानिचित्फलान्येव गृह्णीम' इत्यसौ पद्मलेश्यापरिणामः ।' षष्ठस्तु बभाषे--किं तैरपि त्रोटितैः ?, यावत्प्रमाणैः प्रयोजनमस्माकं तावत्प्रमाणानि फलान्यधस्तादपि पतितान्यस्य विटपिनः प्राप्यन्ते; तद्वयममीभिरेव प्राणवृत्तिं विदध्मः, किमुन्मूलनादिनाऽस्य शाखिनः खेदेन ? ।' इत्ययं शुक्ललेश्यापरिणाम इति ॥

ग्रामघातकदृष्टान्तस्तु कस्मिंश्चिद् ग्रामे धन-धान्यादिलुब्धैः षड्भिस्तस्करस्वामिभिर्मिलित्वा धाटी प्रक्षिप्ता । तत्रैकेनोक्तं--यत्किमपि द्विपद-चतुष्पद-पुरुष-स्त्री बाल-वृद्धादिकं पश्यथ तत्सर्वं मारयत । इत्येवंजातीयः कृष्णलेश्यापरिणामः । द्वितीयस्तु नीललेश्यापरिणामवर्ती बभाषे--'मानुषाण्येव मारयत किं तिर्यग्भिरिति ।' तृतीयः पुनः कापोतलेश्यायुक्तो जगाद--'पुरुषानेव व्यापादयत ?, किं स्त्रीभिरिति ।' चतुर्थस्तु तैजसलेश्यापरिणामान्वितः प्राह--'पुरुषेष्वपि सप्रहरणानेव निशुम्भत, किं निष्प्रहरणैरिति[2] ।पञ्चमः पुनः पद्मलेश्यापरिणामसम्पन्नः प्रोवाच--'सायुधेष्वपि युध्यमानानेव विनाशयत, किमन्यैर्निरपराधैरिति ।' षष्ठस्तु शुक्ललेश्यापरिणामपरिगतः प्रतिपादयति स्म--'अहो महदसमञ्जसं यदेकं तावद् द्रव्यमपहरथ, अपरं च वराकमेनं जनं विनाशयथ, तस्माद्यद्यपि द्रव्यमपहरथ तथापि प्राणांस्तावत्सर्वस्यापि लोकस्यरक्षतेति[3] ॥

१ ० तः-ख चि. । न०-सि. ॥ २ ०रपि-मु. ॥ ३ विशेषार्थं द्रष्टव्यं योगशास्त्रे (४।४४) ॥

तथा कालविहीनं—काललक्षणद्रव्य[1]विरहितं पूर्वोक्तं द्रव्यषट्कमेवास्तिकायाः—धर्मास्तिकाया-ऽधर्मास्तिकाया-ऽऽकाशास्तिकाय-पुद्गलास्तिकाय-जीवास्तिकायलक्षणाः प्रागुक्तस्वरूपाः पञ्चास्तिकाया इत्यर्थः। अथ यथा धर्मास्तिकाय इत्युक्तं तथा कालास्तिकाय इति कस्मान्नोच्यते ? इति चेत् , नैवम् , प्रदेशबहुत्व एवास्तिकायत्वोपपत्तेः, अत्र च तन्नास्ति । अतीता-ऽनागतसमया(ग्रन्थाग्रं १२०००) नां विनष्टा-ऽनुत्पन्नत्वेन प्रज्ञापकप्ररूपणाकाले वर्तमानसमयरूपस्यैव कालप्रदेशस्य सद्भावादिति । यद्येवमावलिका-मुहूर्त-दिवसादिप्ररूपणाया अप्यभावप्रसङ्गः प्राप्नोति, आवलिकादीनामप्यसङ्ख्येयसमयाद्यात्मकत्वेन प्रदेशबहुत्व एवोपपत्तेः, सत्यमेतत् , केवलं स्थिर[2]स्थूलकालत्रयवर्तिवस्त्वभ्युपगमपरव्यवहारनयमतमवलम्ब्याऽऽवलिकादिकालप्ररूपणाः निश्चयनयमतेन तु तदभाव एवेति न कालेऽस्तिकायता ॥९७६॥

पञ्च व्रतान्याह—'पाणिवहे' त्यादि, व्रतं—शास्त्रविहितो नियमः, तस्य च प्रत्येकमभिसम्बन्धात्प्राणिवधव्रत-मृषावादव्रता-ऽदत्तादानव्रत-मैथुनव्रत-परिग्रहव्रतैरिह—जिनसिद्धान्ते पञ्च व्रतानि भणितानि । इतः पञ्च समितीः 'साहेमि' त्ति कथयामि ॥९७७॥

ता एवाह— 'इरिये' त्यादि पूर्वार्धम् , ईर्यासमितिर्भाषासमितिरेषणासमितिर्ग्रहणसमितिः—आदाननिक्षेपसमितिरित्यर्थः, परिष्ठापनासमितिश्चेत्येताः पञ्च समितयः । व्रत-समितिस्वरूपं च षट्षष्टे सप्तषष्टे च द्वारे विस्तरेणोक्तमिति ।

अथ पञ्च गतीराह—'पंचे' त्यादि उत्तरार्धम् , नारकगति-तिर्यग्गति-नरगति-सुरगति-सिद्धगति-



१ ०रहित० मु. ॥ २ ०स्थूलकायत्रय० मु. । ०स्थुरकाल० खं. ॥

नामिकाः पञ्च गतयः । तत्र गम्यते—प्राप्यते स्वकर्मरज्जूसमाकृष्टैर्जन्तुभिरिति गतिः, नारकाणां गतिर्नारकगतिः तिरश्चाम्—एकेन्द्रियादीनां गतिस्तिर्यग्गतिः, नराणां—मनुष्याणां गतिर्नरगतिः; सुराणां—देवानां गतिः सुरगतिः, सिद्धगतिस्तु कर्मजन्या शास्त्रपरिभाषिता न भवति, केवलं गम्यत इति गतिरिति व्युत्पत्तिसाम्यमात्रादिहोपात्तेति ॥९७८॥

अथ पञ्च ज्ञानानि चारित्राणि चाह—'नाणाइ' इत्यादि, मतिश्रुता-ऽवधि-मनःपर्यय-केवललक्षणैर्भेदैः पञ्च ज्ञानानि । एतानि चाग्रे व्याख्यास्यन्ते ।

तथा चर्यते—गम्यते प्राप्यते भवोदधेः परकूलमेभिरिति चरणानि—चारित्राणि, तानि च पञ्च सामायिकं पदैकदेशेऽपि पदसमुदायोपचारात् छेदोपस्थापनिकं परिहारविशुद्धिकं सूक्ष्मसम्परायं यथाख्यातं चेति ।

तत्र समो—राग-द्वेपरहितत्वाद् अयो—गमनं समायः, एष चान्यासामपि साधुक्रियाणामुपलक्षणम्, सर्वासामपि साधुक्रियाणां रागद्वेषरहितत्वात् । समायेन निर्वृत्तं समाये वा भवं सामायिकम्, यद्वा समानां—ज्ञान-दर्शन-चारित्राणामायो—लाभः समायः, समाय एव सामायिकम्; विनयादेराकृतिगणतया स्वार्थे इकण् । तच्च सर्वसावद्यविरतिरूपम्, यद्यपि च सर्वमपि चारित्रमविशेषतः सामायिकम्, तथापि छेदादिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते । प्रथमं पुनरविशेषणात्सामान्यशब्द एवावतिष्ठते सामायिकमिति । तच्च द्विधा—इत्वरं यावत्कथिकं च । तत्र स्वल्पकालभावि इत्वरम्, इदं च भरतैरावतेषु प्रथम-पश्चिमतीर्थकरतीर्थेष्वनारोपितमहाव्रतस्य शैक्षस्य विज्ञेयम्, अत्र जन्मनि यावज्जीवितकथाऽस्त्यात्मन०

स्तावत्कालभावि यावत्कथं तदेव यावत्कथिकं आभववर्तीत्यर्थः । एतच्च भरतैरावतभाविमध्यमद्वाविंशतितीर्थकरतीर्थेषु विदेहतीर्थकरतीर्थेषु च मुनीनामवसेयम्, तेषामुपस्थापनाया अभावात् ।

ननु चेत्वरमपि सामायिकं 'करोमि भदंत ! सामायिकं यावज्जीवम्' इत्येवं व्रतग्रहणकाले यावदायुरागृहीतम्, तत उपस्थापनाकाले तत्परित्यजतः कथं न प्रतिज्ञाभङ्गः ?, उच्यते, ननु प्रागेवोक्तं सर्वमेवेदं चारित्रमविशेषतः सामायिकम्, सर्वमपि [1]सर्वसावद्ययोगविरतिसद्भावात्, केवलं छेदादिविशुद्धिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते । ततो यथा यावत्कथिकं सामायिकं छेदोपस्थापनं वा परमविशुद्धिविशेषरूपसूक्ष्मसम्परायादिचारित्रावाप्तौ न भङ्गमङ्गीकरोति तथा इत्वरमपि सामायिकं [2]विशुद्धिरूपच्छेदोपस्थापनावाप्तौ । यदि हि प्रव्रज्या परित्यज्यते तर्हि तद्भङ्ग आपद्यते न तु तस्यैव विशुद्धिविशेषावाप्ताविति ।

तथा छेदः पूर्वपर्यायस्य उपस्थापना च महाव्रतेषु यस्मिन् चारित्रे तच्छेदोपस्थापनम् [3]तदेव छेदोपस्थापनिकम्, [4]ते वा विद्यते यत्र तच्छेदोपस्थापनिकम्, तच्च द्विधा—सातिचारं निरतिचारं च । तत्र निरतिचारं यदित्वरसामायिकवतः शैक्षस्यारोप्यते; तीर्थान्तरसङ्क्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वर्धमानस्वामितीर्थं संक्रामतः पञ्चयामधर्मप्रतिपत्तौ । सातिचारं यन्मूलगुणघातिनः पुनर्व्रतारोपणम् ।

१ सर्व० मु. नास्ति ॥ २ विशुद्धिरूपसूक्ष्मपच्छेदो० खं. । ०विशुद्धिरूपसूक्ष्मच्छेदो० वि. । विशुद्धिरूपसूक्ष्मरूपच्छेदो० सि. ॥
३ तदेव छेदोपस्थानिकं ख. वि. सि. नास्ति ॥ ४ तदेव वा- मु सि. ॥

तथा परिहरणं परिहारः—तपोविशेषस्तेन विशुद्धिः—कर्मनिर्जरारूपा यस्मिन् चारित्रे तत्परिहारविशुद्धिकम्। तच्च द्विधा—निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानका—विवक्षितचारित्रासेवकाः, निर्विष्टकायिका—आसेवितविवक्षितचारित्रकाया[1]ः, तदव्यतिरेकाच्चारित्रमप्येवमुच्यते । इह नवको गणश्चत्वारो निर्विशमानकाश्चत्वारश्चानुचारिणः एकः कल्पस्थितो वाचनाचार्यः, एतत्स्वरूपं च सविस्तरमेकोनसप्ततिद्वारे प्रत्यपादि ।

तथा सम्पर्येति—पर्यटति संसारमनेनेति सम्परायः—कषायोदयः, सूक्ष्मो—लोभांशावशेषः सम्परायो यत्र तत् सूक्ष्मसम्परायम्, तच्च द्विधा—विशुद्ध्यमानकं संक्लिश्यमानकं च। तत्र विशुद्ध्यमानकं क्षपकश्रेणिमुपशमश्रेणिं वा समारोहतः सङ्क्लिश्यमानं तूपशमश्रेणितः प्रच्यवमानस्य ।

तथा अथशब्दो– [2]याथातथ्यार्थे, आङ् अभिविधौ; [3]याथातथ्येन अभिविधिना [4]यत् ख्यातं—कथितम् अकषायचारित्रमिति तत् अथाख्यातम्; यथाख्यातमिति द्वितीयं नाम । तस्यायमन्वर्थः—यथा सर्वस्मिन् जीवलोके ख्यातं—प्रसिद्धमकषाय भवति चारित्रमिति तथैव यत्तत् यथाख्यातम्। इदं च द्विधा—छाद्मस्थिकं कैवलिकं च, तत्र छाद्मस्थिकमुपशान्तमोहगुणस्थानके क्षीणमोहगुणस्थानके वा; कैवलिकं सयोगिकेवलिभवमयोगिकेवलिभवं चेति ॥९७९॥१५२॥

१ ०काः- मु. ॥ २ यथा० वि. ॥ ३ यथा० मु. ॥ ४ वा-मु. ॥

इदानीं 'सड्ढपडिमाओ' त्ति त्रिपञ्चाशदधिकशततमं द्वारमाह—

[1]दंसण १ वय २ सामाइय ३ पोसह ४ पडिमा ५ अबंभ ६ सच्चित्ते ७ ।
आरंभ ८ पेस ९ उद्दिट्ठ १० वज्जए समणभूए ११ य ॥९८०॥
जस्संखा जा पडिमा तस्संखा तीए हुंति मासावि ।
कोरंतीसुवि कज्जाउ तासु पुव्वुत्तकिरिया उ ॥९८१॥
पसमाइगुणविसिट्ठं कुग्गहसंकाइसल्लपरिहीणं ।
[2]सम्मदंसणमणहं दंसणपडिमा हवइ पढमा १ ॥९८२॥
[3]बीयाणुव्वयधारी २ सामाइकडो य होइ तइयाए ३ ।
होइ चउत्थी चउद्दसीअट्ठमिमाईसु [4]दियहेसु ॥९८३॥
पोसह चउव्विहंपि य पडिपुण्णं सम्म सो उ अणुपाले ।
बंधाई अइयारे पयत्तओ [5]वज्जईमासु ॥९८४॥
सम्ममणुव्वयगुणवयसिक्खावयवं थिरो य नाणी य ।
[6]अट्ठमिचउद्दसीसु' पडिमं ठाएगराईयं ॥९८५॥

[1] तुलना-पञ्चाशकप्र १०।३तः, आवश्यकहारिभद्रीयावृत्तिः प. ६४६, धर्मसं. वृत्तिः भा. १ । प. २५८ तः । सुदंसणा चरियं उद्देश १६, गा. २७३ तः प. १३३ ॥ २ सम्मदंसणमेव–ता. ॥ ३ बीया अणुव्वयधरा-ता. ॥ ४ दिवसेसु-मु. दिहयेसु–जे. २ । पञ्चाशकेऽपि दिहयेसु इति पाठः ॥ ५ वज्जइ इमासु–ता. ॥ ६ अट्ठमी० मु. समवायाङ्गवृत्तौ [प. २० A ] च । पञ्चाशकेऽपि अट्ठमि० इति पाठः ॥

असिणाण[1] वियडभोई मउलियडो दिवसबंभयारी य ।
रत्ति परिमाणकडो पडिमावज्जेसु दिवसेसु ॥९८६॥
झायइ पडिमाए ठिओ तिलोयपुज्जे जिणे जियकसाए ।
नियदोसपच्चणीयं अन्नं वा पंच जा मासा ॥९८७॥ [पञ्चाशकप्र. १०।१७-१९]
सिंगारकहविभूसुक्करिसं इत्थीकहं च वज्जिंतो ।
वज्जइ अबंभमेगंतओ य छट्ठाइ छम्मासे ॥९८८॥
सत्तमि सत्त उ मासे नवि आहारइ सच्चित्तमाहारं ।
जं जं हेट्ठिल्लाणं [2]तं तूवरिमाण सव्वंपि ॥९८९॥
आरंभसयकरणं अट्ठमिया अट्ठ मास वज्जेइ ।
नवमा नव मासे पुण पेसारंभेऽवि वज्जेइ ॥९९०॥
दसमा दस मासे पुण उद्दिट्ठकयंपि [3]भत्त नवि भुंजे ।
सो होइ उ छुरमुंडो सिहलिं वा धारए कोई ॥९९१॥
जं निहियमत्थजायं पुच्छंत [4]सुयाण नवरि सो तत्थ ।
जइ जाणइ तो साहइ अह नवि तो बेइ नवि याणे ॥९९२॥

---

१ ०णि-पो. ॥ २ त तं चरि० मु. । त तुमुवरि० ता. । तं तूवरि० पो. ॥ ३ भोत्तु नवि-जे.२ । भत्तमवि-जे. ॥
४ सुआ।ण-वि. ॥

खुरमुंडो [1]लोएण व रयहरणं पडिग्गहं च गिण्हित्ता ।
[2]समणब्भूओ विहरइ मासा एक्कारसुक्कोसं ॥९९३॥
ममकारेऽवोच्छिन्ने वच्चइ सन्नायपल्लि दट्ठं जे ।
तत्थवि साहुव्व जहा गिण्हइ [3]फासुं तु आहारं ॥९९४॥

'दंसण' गाहा, [8]दर्शनं च–सम्यक्त्वम्, व्रतानि च–अणुव्रतादीनि, सामायिकं च–सावद्या-ऽनवद्ययोगपरिवर्जनासेवनस्वरूपम्, पौषधं च–अष्टमी-चतुर्दश्यादिपर्वदिनानुष्ठेयोऽनुष्ठानविशेषः, प्रतिमा च कायोत्सर्गः, अब्रह्म च–अब्रह्मचर्यम्, सचित्तं च–सचेतनद्रव्यम् इति समाहारद्वन्द्वः । तत एतस्मिन् विषये प्रतिमेति प्रस्तावादवसेयम्, अत्र च दर्शनादिषु पञ्चसु विधिद्वारेण प्रतिमाभिग्रहः, अब्रह्म सचित्तयोस्तु प्रतिषेधमुखेनेति । तथा आरम्भश्च–स्वयं कृष्यादिकरणम्, [4]प्रैषश्च–प्रेषणं परेषां पापकर्मसु व्यापारणम्, उद्दिष्टं च–तमेव श्रावकमुद्दिश्य [5]सचेतनं सदचेतनीकृतं पक्वं वा यो वर्जयति–परिहरति स [7]आरम्भप्रैषोद्दिष्टवर्जकः । प्रतिमेति प्रकृतमेव, इह च प्रतिमानां प्रक्रान्तत्वेऽपि प्रतिमा-प्रतिमावतोरभेदोपचारात्प्रतिमावतो निर्देशः कृतः, एवमुत्तरत्रापि । तथा श्रमणः–साधुः स इव यः स श्रमणभूतः, भूतशब्दस्योपमानार्थत्वात् । चः समुच्चये । आसां च दर्शन[8]प्रतिमा व्रतप्रतिमेत्यादिरूपोऽभिलापः कार्यः । एता एकादश श्राद्धानाम्–उपासकानां प्रतिमाः–प्रतिज्ञा अभिग्रहाः श्राद्धप्रतिमा इति ॥९८०॥

१ ०डा-ता. ॥ २ समणो हुओ-मु. ॥ ३ फास-वि. सि ॥ ४ तुलना–पञ्चाशकवृत्ति. प. १६३ ॥ ५ प्रेषश्च-ख. सि. ॥ ६ सचेतनमचे० वि. ॥ ७ आरम्भप्रेषो० ख. सि पञ्चाशकवृत्तौ च ॥ ८ प्रतिमाव्रतानां-खं. प्रतिमादीनां प्रतिमे० सि. ॥

अथैतासामेव प्रतिमाणां प्रत्येकं स्वरूपं प्रतिपिपादयिषुः प्रथमं तावत् कालमानं सामान्यस्वरूपं चाह— जस्संखे' त्यादि, यत्सङ्ख्या–यावत्सङ्ख्यामाना प्रथम-द्वितीयादिकेत्यर्थः प्रतिमा तस्यां मासा अपि तत्सङ्ख्याः–तावत्प्रमाणा भवन्ति । अयमर्थः–प्रथमायां प्रतिमायामेको मासः कालमानम्, द्वितीयायां द्वौ मासौ, तृतीयायां त्रयो मासा यावदेकादश्यां प्रतिमायामेकादश मासा इति ।

एतच्च कालमानं यद्यपि दशाश्रुतस्कन्धादिषु साक्षान्नोपलभ्यते [1]तथाऽप्युपासकदशासु प्रतिमाकारिणामानन्दादिश्रमणोपासकानां सार्धवर्षपञ्चकलक्षणं प्रतिमैकादशप्रमाणं प्रतिपादितमस्ति, तच्च पूर्वोक्तयैव एकादिकयैकोत्तरया वृद्धया सङ्गच्छत इति । तथा उत्तरोत्तरास्वपि तासु प्रतिमासु क्रियमाणासु पूर्वपूर्वप्रतिमाप्रतिपादिताः सर्वा अपि क्रिया–अनुष्ठानविशेषरूपाः कर्तव्या एव । तुशब्द एवकारार्थः ।

इदमत्र तात्पर्यम्–द्वितीयायां प्रतिमायां प्रथमप्रतिमोक्तमनुष्ठानं निरवशेषमपि कर्तव्यम्, तृतीयायां तु प्रतिमायां प्रथमद्वितीय [2]प्रतिमाद्वयोक्तमप्यनुष्ठानं विधेयम्, एवं यावदेकादश्यां प्रतिमायां पूर्वप्रतिमा [3]दशकोक्तं सर्वमप्यनुष्ठानं विधेयम्, एवं यावदेकादश्यां प्रतिमायां पूर्वप्रतिमा[4]दशकोक्तं सर्वमप्यनुष्ठानं कार्यमिति ॥९८१॥

अथ दर्शनप्रतिमास्वरूपनिरूपणायाह— **'पसमे'** त्यादि, सम्यग्दर्शनं–सम्यक्त्वं [5]प्रथमा दर्शन-

१ उपासकदशावृत्तिः (प. १७ तः) द्रष्टव्या ॥ २ ०प्रतिमोक्त० खं. ॥ ३ ०दशोक्तं–खं. ॥ ४ ०दशोक्तं–खं. ५ प्रतिमा–रो. ॥

प्रतिमा भवतीति सम्बन्धः । कथम्भूतं सम्यग्दर्शनमित्याह—प्रशमादिगुणविशिष्टं— [1]प्रशम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्यलक्षणैः पञ्चभिर्गुणैर्विशिष्टम्—अन्वितम्, तथा कुग्रहश्च-तत्त्वं प्रति शास्त्रबाधितत्वेन कुत्सितोऽभिनिवेशः, शङ्कादयश्च—शङ्का-काङ्क्षा-विचिकित्सा-मिथ्यादृष्टिप्रशंसा-तत्संस्तवरूपाः पञ्च सम्यक्त्वातीचाराः कुग्रहशङ्कादयस्त एव शल्यते—अनेकार्थत्वाद्बाध्यते जन्तुरेभिरिति शल्यानि, तैः परिहीनं—रहितम्, अत एव अनघं—निर्दोषम्,

अयमत्र भावार्थः—सम्यग्दर्शनस्य कुग्रहशङ्कादिशल्यरहितस्याणुव्रतादिगुणविकलस्य योऽभ्युपगमः सा [2]दर्शनप्रतिमेति । सम्यग्दर्शनप्रतिपत्तिश्च तस्य पूर्वमप्यासीत् केवलमिह शङ्कादिदोषराजाभियोगाद्याकारषट्कवर्जितत्वेन यथावत्सम्यग्दर्शनाचारविशेषपरिपालनाभ्युपगमेन च प्रतिमात्वं सम्भाव्यते । कथमन्यथा उपासकदशासु एकमासं प्रथमायाः [3]प्रतिमायाः पालनेन, द्वौ मासौ द्वितीयायाः प्रतिमायाः पालनेन, एवं यावदेकादश मासानेकादश्याः पालनेन पञ्च सार्धानि वर्षाण्यर्थतः प्रतिपादितानीति, न चायमर्थो

१ तुलना— "अत्थिक्काइगुणजुतो–(१०।६) अथ गुणसद्भावमाह—आस्तिक्यादिगुणयुत आस्तिक्या-ऽनुकम्पा-निर्वेद-संवेग-प्रशमगुणान्वितः । ग्रन्थान्तरे तु यथाप्रधानन्यायमाश्रित्य प्रशमादयोऽभिधीयन्ते । इह त्वास्तिक्यप्रभवत्वात्क्रमेणान्येषामेवमुपन्यासः । आस्तिक्यमेव चोररीकृत्य दशाश्रुतस्कन्धादौ दर्शनप्रतिमोच्यते । तथाहि—'पढमं उवासगपडिमं पडिवण्णे समणोवासए सव्वधम्मरुई आविभवई, आहियदिट्ठी आहियपण्णे' (          ) इत्यादि तत्सूत्रम् । अत आस्तिक्यादिगुणयुत इत्युक्तम् ।" इति पञ्चाशकवृत्तौ प. १६४॥
२ दर्शन० जे.खं. नास्ति, सि. प्रतौ पार्श्वभागे योजितम् ॥ ३ प्रतिमायाः-खं. सि. पो. नास्ति ॥

दशाश्रुतस्कन्धादावुपलभ्यते । श्रद्धामात्ररूपायास्तत्र तस्याः प्रतिपादनात्, एवं दर्शन (व्रत) प्रतिमादिष्वपि यथायोगं भावना कार्या ॥१८२॥

अथ गाथाद्वयेन व्रत-सामायिक-पौषधप्रतिमात्रयमाह—'बीये' त्यादि, अणुव्रतानि—स्थूलप्राणातिपात-विरमणादीनि, उपलक्षणत्वाद् गुणव्रतानि शिक्षाव्रतानि च वध-बन्धाद्यतिचाररहितानि निरपवादानि च धारयतः सम्यक्परिपालयतो द्वितीया व्रतप्रतिमा भवति । सूत्रे च प्रतिमा-प्रतिमावतोरभेदोपचारादित्थं निर्देशः । तथा तृतीयायां—सामायिकप्रतिमायां सामायिकं—सावद्ययोगपरिवर्जननिरवद्ययोगासेवनस्वभावं कृतं-विहितं देशतो येन स सामायिककृतः । आहिताग्न्यादिदर्शनात् क्तान्तस्योत्तरपदत्वम् । इदमुक्तं भवति—अप्रतिपन्नपौषधस्य दर्शनव्रतोपेतस्य प्रतिदिनमुभयसन्ध्यं सामायिककरणं तृतीया प्रतिमेति । तथा [1]भवति चतुर्थी पौषधप्रतिमा यस्यां चतुर्दश्यष्टम्यादिषु दिवसेषु—चतुर्दश्यष्टम्यमावास्यापौर्णमासीषु पर्वतिथिषु चतुर्विधमप्याहार-शरीर-सत्कारा-ऽब्रह्मचर्य-व्यापारपरिवर्जनरूपं पौषधं परिपूर्णम्, न पुनरन्यतरेणापि प्रकारेण परिहीनं सम्यग् आगमोक्तविधिना स—प्रतिमाप्रतिपत्ता तुशब्दस्यावधारणार्थत्वादनुपालयत्येव—आसेवत एव । एतासु चतसृष्वपि व्रतादिषु प्रतिमासु बन्धादीन्—बन्ध-वध-च्छविच्छेदप्रभृतीन् [2]पष्टिसंख्यान् अतिचारान् द्वादशव्रतविषयान् प्रयत्नतो वर्जयति—परिहरतीति ॥१८३॥१८४॥

अथ प्रतिमाप्रतिमास्वरूपमाह—'सम्ममणुव्वय' गाहा, सम्म' त्ति सम्यक्त्वं मकारोऽला-

१ भवति मु. नास्ति ॥ २ पष्टिसङ्ख्यान्-जे. नास्ति सि. प्रतौ पार्श्वभागे योजितम् ॥

क्षणिकः अणुव्रत-गुणव्रत-[1]शिक्षाव्रतपदानि च यस्य विद्यन्ते स तद्वान्, पूर्वोक्तप्रतिमाचतुष्टयान्वित इत्यर्थः। स्थिरः-अविचलसत्त्वः, इतरो हि तद्विराधको भवति। यतोऽस्यां प्रतिमायां निशि चतुष्पथादौ कायोत्सर्गः क्रियते, तत्र चोपसर्गाः प्रभूताः सम्भवन्तीति। ज्ञानी च-प्रतिमाकल्पादिपरिज्ञानप्रवणः, अजानानो हि सर्वत्राप्ययोग्यः किं पुनरेतत्प्रतिमाप्रतिपत्ताविति। अष्टमीचतुर्दश्योरुपलक्षणत्वादष्टमीचतुर्दश्यमावास्या-पौर्णमासीरूपेषु पौषधदिनेष्वपि द्रष्टव्यम्, 'प्रतिमां' कायोत्सर्गं 'ठाइ' त्ति तिष्ठति, धातूनामनेकार्थत्वात्करोतीत्यर्थः। किम्प्रमाणामित्याह-एका रात्रिः परिमाणमस्या इत्येकरात्रिकी- [2]सर्वरात्रिकी तां यस्तस्य प्रतिमा [3]प्रतिमा भवतीति शेषः ॥९८५॥

शेषदिनेषु यादृशोऽसौ भवति तद्दर्शयितुमाह— [4]'असिणाणे' त्यादि, अस्नानः-स्नानपरिवर्जकः, विकटे-प्रकटे प्रकाशे दिवा न रात्रावित्यर्थः, दिवापि वा प्रकाशदेशे भुङ्क्ते-अशनाद्यभ्यवहरतीति विकटभोजी। पूर्वं किल रात्रिभोजनेऽनियम आसीत् तदर्थमिदमुक्तम्, 'मउलियडो' त्ति अबद्धपरिधानकच्छ इत्यर्थः। तथा दिवसे-दिवा ब्रह्म चरतीत्येवंशीलो दिवसब्रह्मचारी। 'रत्तिं' त्ति रात्रौ किमत आह-परिमाणं-स्त्रीणां तद्भोगानां वा प्रमाणं कृतं येन स परिमाणकृतः। कदेत्याह-प्रतिमावर्जेषु-कायोत्सर्गरहितेष्वपर्वस्वित्यर्थः, दिवसेषु-दिनेष्विति ॥९८६॥

---

१ शिक्षाव्रतानि-मु.। ०शिक्षापदानि-जे. खं. पो. ॥ शिक्षाव्रतपदानि-इति पञ्चाशकवृत्तौ पाठः प. १६८। तुलना-पञ्चाशकवृत्तिः ॥ २ सार्वे० मु.। खं. सि. पो. प्रतिषु पञ्चाशकवृत्तावपि सर्व० इति पाठः ॥ ३ प्रतिमा-मु. नास्ति ॥ ४ तुला-'असिणाइ' त्ति अस्नायी स्नानपरिवर्जकः, क्वचित्पठ्यते-'अनिसाइ' त्ति न निशायामत्तीत्यनिशादी।' इति समवायाङ्गवृत्तौ प. २० A ॥

अथ कायोत्सर्गस्थितो यच्चिन्तयति तदाह— '**झायई**' त्यादि, ध्यायति—चिन्तयति प्रतिमायां कायोत्सर्गस्थितः—अवस्थितस्त्रिलोकपूज्यान्—त्रिभुवनाभ्यर्चनीयान् जिनान्-तीर्थकृतो जितकषायान्—निरस्तसमस्तद्वेषादिदोषान्, अन्यद्वा जिनापेक्षया निजदोषप्रत्यनीकं—स्वकीयकाम-क्रोधप्रमुखदूषणप्रतिपक्षभूतं कामनिन्दा-क्षान्तिप्रभृतिकं ध्यायति । कियत्प्रमाणेयं पञ्चमी प्रतिमेत्याह— [1]पञ्च मासान् यावदिति ॥९८७॥

अथ षष्ठीं प्रतिमामाह— '**सिंगारे**' त्यादि, शृङ्गारकथा—कामकथा, तथा विभूषायाः—स्नानविलेपन-[2]धूपनप्रभृतिकाया [3]उत्कर्षः— [4]प्रकर्षः, ततः समाहारद्वन्द्वः, तद्वर्जयन्—परिहरन्; उत्कर्षग्रहणाच्छरीरमात्रानुगां विभूषां विदधान्यपीति । तथा स्त्रिया—योषिता सह रहसि कथां—प्रणयवार्तां वर्जयन्; किमित्याह—वर्जयति अब्रह्म-मैथुनमेकम्, '**तओ य**' त्ति [5]तकः—असौ प्रतिमाप्रतिपत्ता, षष्ठ्याम्—अब्रह्मवर्जनप्रतिमायां षण्मासान् यावत् । पूर्वस्यां हि प्रतिमायां दिवस एव मैथुनं प्रतिषिद्धम्, रात्रौ पुनरप्रतिषिद्धमासीत्; अस्यां तु दिवापि रजन्यामपि च सर्वथापि मैथुनप्रतिषेधः । अत एवात्र चित्तविप्लुतिविधायिनां कामकथादीनामपि प्रतिषेधः कृत इति ॥९८८॥

अथ सप्तमीं प्रतिमामाह—'**सत्तमी**' त्यादि, सप्तम्यां—सचित्ताहारवर्जनप्रतिमायां सप्त मासान् यावत् सचित्तं—सचेतनमाहारम्—अशन-पान-खादिम-स्वादिमस्वरूपं नैवाहारयति—अभ्यवहरति । तथा यद्यदधस्तनीनां— [6]प्राक्तनीनां प्रतिमानामनुष्ठानं तत्तत्सर्वमपि—निरवशेषमुपरितनीनाम्—अग्रेतनप्रतिमानामव-

१ एव पञ्च-पो. ॥ २ ०धूपप्र० मु. ॥ ३ उत्कर्षतः—खं. पो. ॥ ४ प्रकर्षतः-खं. ॥ ५ ततः कोसौ प्रतिमाप्रत्त्या—जे. ॥ ६ प्राक्तनीनां—ख. नास्ति ॥

सेयम्, एतच्च प्रागुक्तमपि विस्मरणशीलविनेयजनानुग्रहाय पुनरुपन्यस्तम्, एवमन्यत्रापि ॥१८९॥

अथाष्टमी-नवम्यौ प्रतिमे प्रतिपादयितुमाह—'आरंभे' त्यादि, अष्टमी—स्वयमारम्भवर्जनप्रतिमा भवति यस्यामष्टौ मासान् यावदारम्भस्य—पृथिव्याद्युपमर्दनलक्षणस्य स्वयम्—आत्मना करणं—विधानं वर्जयति—परिहरति । स्वयमिति वचनाच्चैतदापन्नं— [1]वृत्तिनिमित्तमारम्भेषु तथाविधतीव्रपरिणामरहितः परैः कर्मकरादिभिः सावद्यमपि व्यापारं कारयतीति ।

ननु स्वयमप्रवर्तमानस्याप्यारम्भेषु प्रेष्यान् व्यापारयतः प्राणिहिंसा तदवस्थैव, सत्यम्, किन्तु [2]या सर्वथैव स्वयमारम्भाणां करणतः परैश्च कारणत उभयजन्या हिंसा सा स्वयमकरणतस्तावत्परिहृतैव । यतः स्वल्पोऽपि प्रारम्भः परिहृयमाणः प्रोज्जृम्भमाणमहाव्याधेः स्तोकतर-स्तोकतमक्षय इव हित एव [3]भवतीति ।

एषा पुनर्नवमी—प्रेष्यारम्भवर्जनप्रतिमा भवति; यस्यां नव मासान् यावत् पुत्र-भ्रातृप्रभृतिषु न्यस्त-समस्तकुटुम्बादिकार्यभारतया धन-धान्यादिपरिग्रहेष्वल्पाभिष्वङ्गतया प्रेष्यैरपि—कर्मकरादिभिरपि आस्तां स्वयम् आरम्भान्—सपापव्यापारान् महतः कृष्यादीनिति भावः । आसनदापनादिव्यापाराणां पुनरतिलघू-नामनिषेध एव; तथाविध[4]कर्मबन्धहेतुत्वाभावेनारम्भत्वानुपपत्तेः ॥१९०॥

अथ दशमीं प्रतिमामाह—'दसमे' त्यादि, दशमी पुनरुद्दिष्टभक्तवर्जनप्रतिमा दश मासान् याव-द्भवति, यस्यामुद्दिष्टम्—उद्देशस्तेन कृतं—विहितमुद्दिष्टकृतम्; तमेव श्रावकमुद्दिश्य संस्कृतमित्यर्थः ।

१ वृत्तिनिवृत्त० ख. ॥ २ या—जे. नास्ति ॥ ३ भवति—मु. सि. ॥ ४ ०कर्म० जे. नास्ति ॥

एवंस्वरूपं भक्तमपि–ओदनादिकं नैव भुञ्जीत, आस्तां तावदितरसावद्यव्यापारकरणमित्यपिशब्दार्थः । 'सो होइ' त्ति स पुनर्दशमप्रतिमाप्रतिपत्ता कश्चित् क्षुरमुण्डः–क्षुरमुण्डितमस्तको भवति, 'सिहिलिं' ति शिखां वा शिरसि कोऽपि धारयतीति ॥९९१॥

तथा–'जं निहिय' गाहा, नवरं–केवलं स श्रावकस्तत्र–तस्यां दशमप्रतिमायां स्थितो यन्निहितं–भूम्यादौ [1]निक्षिप्तमर्थजातं–द्रव्यं सुवर्णादिकं तत्पृच्छतां सुतानां- पुत्राणाम् उपलक्षणत्वाद्भ्रात्रादीनां च यदि जानाति ततः कथयति, अकथने वृत्तिच्छेदप्राप्तेः; अथ नैव जानाति ततो ब्रूते–नैवाहं किमपि जानामि–स्मरामीति । एतावन्मुक्त्वा नान्यत्किमपि तस्य गृहकृत्यं कर्तुं कल्पत इति तात्पर्यम् ॥९९२॥

अथैकादशीं प्रतिमामाह–'खुरमुंडो' गाहा, क्षुरेण मुण्डो- मुण्डितः क्षुरमुण्डो लोचेन वा–हस्तलुञ्चनेन मुण्डः सन् रजोहरणं पतद्ग्रहं च उपलक्षणमेतत् सर्वमपि साधूपकरणं गृहीत्वा [2]'समणभूओ' त्ति श्रमणो–निर्ग्रन्थस्तद्वद् यस्तदनुष्ठानकरणात्स श्रमणभूतः साधुकल्प इत्यर्थः, विहरेत्–गृहान्निर्गत्य निखिलसाधुसामाचारीसमाचरणचतुरः समिति-गुप्त्यादिकं [3]च सम्यगनुपालयन् , [4]भिक्षार्थं गृहिकुलप्रवेशे सति श्रमणोपासकाय प्रतिमाप्रतिपन्नाय भिक्षां दत्तेति भाषमाणः, कस्त्वमिति कस्मिंश्चित्पृच्छति प्रतिमाप्रतिपन्नः श्रमणोपासकोऽहमिति ब्रुवाणो ग्राम-नगरादिष्वनगार इव मासकल्पादिना विचरेदेकादश मासान् यावदिति । एतच्चोत्कृष्टतः कालमानमुक्तम् , जघन्यतः पुनरेकादशापि प्रतिमाः प्रत्येकमन्तर्मुहूर्तादिमाना एव; तच्च मरणे वा प्रव्रजितत्वे वा [5]सम्भवति, नान्यथेति ॥९९३॥

१ क्षिप्त० सि. वि. ॥ २ समणहूओ-मु. ॥ ३ च-मु. नास्ति ॥ ४ तुला–समवायाङ्गवृत्तिः प. २० ॥ ५ प्रव्रजति-सि. वि. ॥

तथा—'**ममकारे**' गाहा, ममेत्यस्य करणं ममकारस्तस्मिन्नव्यवच्छिन्ने—अनपगते सति, अनेन स्वजनदर्शनार्थित्वकारणमुक्तम्, संज्ञाताः—स्वजनास्तेषां पल्ली—सन्निवेशस्तां संज्ञातपल्लीं व्रजति—गच्छति द्रष्टुं—विलोकयितुं संज्ञातानिति गम्यते। 'जे' इति पादपूरणे, तत्रापि—संज्ञातपल्ल्यामपि, आस्तामन्यत्र, साधुरिव—संयत इव वर्तते, न पुनः स्वजनोपरोधेन गृहचिन्तादिकं कुर्यात्। यथा च साधुः प्रासुकमेषणीयं च गृह्णाति तथा सोऽपि श्रमणभूतप्रतिमाप्रतिपत्ता[1] प्रासुकमेव—प्रगतासुकमेवाचेतनमेवोपलक्षणत्वादस्यैषणीयं चाहारम्—अशनादिकं गृह्णातीति। ज्ञातयो हि स्नेहादनेषणीयं भक्तादि कुर्वन्ति, आग्रहेण च तद् ग्राहयितुमिच्छन्ति, अनुवर्तनीयाश्च ते प्रायो भवन्तीति तद्ग्रहणं सम्भाव्यते, तथापि तदसौ न गृह्णातीति भावः॥

इह चोत्तरासु सप्तसु प्रतिमास्वा**वश्यकचूर्ण्यां** प्रकारान्तरमपि दृश्यते, तथाहि—

[2]''राईभत्तपरिन्नाएत्ति पञ्चमी, सचित्ताहारपरिन्नाएत्ति षष्ठी, दिया ब्रह्मचारी राओपरिमाणकडेत्ति सप्तमी, दियावि[3]राओवि बंभयारी असिणाणए वोसट्ठकेसमंसुरोमनहेत्ति अष्टमी, सारंभपरिन्नाएत्ति नवमी, पेसारंभपरिन्नाएत्ति दशमी, [4]उद्दिट्ठभत्तविवज्जए समणभूएत्ति एकादशी'' [भा. २। पृ. १२०] ति ॥९९४॥१५३॥

इदानीं '**धन्नागम[5]बीयत्तं**' ति चतुष्पञ्चाशदधिकशततमं द्वारमाह—

**जव १ जवजव २ गोहुम ३ सालि ४ वीहि ५ धन्नाण कोट्ठयाईसु[1]।**
**खिविऊणं पिहियाण लित्ताणं मुद्दियाणं च ॥९९५॥**

१ °न्नः-मु.॥ २ तुला—समवायाङ्गवृत्तिः प. १०तः। पञ्चाशकवृत्तिः १०।३६॥ ३ राओवि-वि. नास्ति ॥ ४ उद्दिट्ठन्नविवज्जए-मु। उद्दिट्ठभत्तवज्जए-इति समवायाङ्गवृत्तौ [प. २१ A] पञ्चाशकवृत्तौ [१०।३६] च पाठः॥ उद्दिट्ठभत्तविवज्जिए ख.वि.॥ ५ वीयति त्ति खं. ॥ तुलना-भगवतीसू. २४७ ॥

उक्कोसेणं ठिइ [1]होइ तिन्नि वरिसाणि तयणु एएसिं ।
विद्धंसिज्जइ जोणी तत्तो जायइ अबीयत्तं ॥९९६॥
तिल १ मुग्ग २ मसुर ३ कलाय ४ मास ५ [2]चवलय ६ कुलत्थ ७ तुवरीणं ८ ।
तह कसिणचणय ९ वल्लाण १० कोट्ठयाईसु खिविऊणं ॥९९७॥
ओलित्ताणं पिहियाण लंछियाणं च मुद्दियाणं च ।
उक्किट्ठठिई वरिसाण पंचगं तो अबीयत्तं ॥९९८॥
अयसी १ लट्टा २ कंगू ३ कोडूसग ४ सण ५ वरट्ट ६ सिद्धत्था ७ ।
कोद्दव ८ रालग ९ मूलगबीयाणं १० [3]कोट्ठयाईसु ॥९९९॥
निक्खित्ताणं एयाणुक्कोसठिईए[4] सत्त वरिसाइं ।
होइ जहन्नेण पुणो अंतमुहुत्तं समग्गाणं ॥१०००॥

'जव जवे' त्यादिगाथाद्वयम् , यवा गोधूमाश्च प्रतीताः, यवयवा–यवविशेषाः, शालयः–कलमादि-विशेषाः, व्रीहयः–सामान्यतः, एतेषां धान्यानां कोष्ठकादिषु–कुशूल-पल्यप्रभृतिषु क्षिप्त्वा–प्रक्षिप्य पिहितानां–तथाविधपिधानकेन स्थगितानाम् , लिप्तानां–द्वारदेशे पिधानेन सह गोमयादिना सर्वतोऽवलिप्तानाम् , मुद्रितानां च–मृत्तिकादिमुद्रावतामुत्कर्षतस्त्रीणि वर्षाणि यावत् स्थितिः--अविनष्टयोनिकत्वेन अवस्थानं [5]भवति । तदनु–ततः परमेतेषां--यवादीनां पञ्चानां धान्यानां योनिः--अङ्कुरोत्पत्तिहेतुर्विध्वस्यते--क्षीयते,

१ होई-वि. सि. ॥ २ कव० वि. सि. ॥ ३ कोट्ठईयासु–मु. । कोट्टाईयाईसु–सि. । कोट्ठयाईसु–ता. ॥ ४ ०ए-वि. नास्ति ॥ ५ भवतीति–मु. ॥

ततो--योनिविध्वंसे सति जायतेऽबीजत्वं--तद्बीजमबीजं भवति, उप्तमपि नाङ्कुरमुत्पादयतीति भावः ॥९९५॥९९६॥

तथा-'तिले' त्यादि, तिल-मुद्ग-माष-चवलकाः प्रतीताः, [1]मसूरो--वृत्ताकारो धान्यविशेषः, (ग्रन्था० ७००) [2]चनकिका इत्यन्ये, [3]कलायः--त्रिपुटाख्यो धान्यविशेषः, कुलत्थाः--चवलकाकारा [4]श्चिपिटिका भवन्ति, तुवर्यः--आढक्यः, वृत्तचणकाः--शिखारहिता वृत्ताकाराश्चणकविशेषाः, वल्ला--निष्पावाः, एतेषां दशानां धान्यानां कोष्ठकादिषु क्षिप्त्वा पिहितानां ततोऽवलिप्तानां ततो लाञ्छितानां--रेखादिभिः कृतलाञ्छनानां मुद्रितानां चोत्कृष्टा स्थितिर्वर्षपञ्चकं यावद्भवतिः ततोऽबीजत्वं जायते । छन्दोऽनुरोधाच्च पिहिता-ऽवलिप्तयोर्व्यतिक्रमनिर्देशः ॥९९७॥९९८॥

प्र. आ. २९६

'अयसी' त्यादि गाथाद्वयम् , अतसी--क्षुमा, लट्टाकुसुम्भम् , कङ्गुः--पीततण्डुलाः,'कोडूसग' त्ति कोरदूषकः[5] कोद्रवविशेषः, शणं--त्वक्प्रधानो धान्यविशेषः, [6]'वरट्ट' त्ति धान्यविशेषः, स बरठीति सपादलक्षादिषु प्रसिद्धः, सिद्धार्थाः--सर्षपाः, कोद्रवाः प्रतीता एव, रालकः--कङ्गुविशेषः, मूलकं--शाकविशेषस्तस्य बीजानि मूलकबीजानि, एतेषां दशानामपि धान्यानां कोष्ठकादिषु निक्षिप्तानाम् , उपलक्षणमेतत् पिहितानामवलिप्तानां लाञ्छितानां मुद्रितानां चोत्कृष्टायां स्थितौ सप्त वर्षाणि भवन्ति ।

जघन्येन पुनः समग्राणां--सर्वेषामपि पूर्वोक्तानां धान्यानामन्तर्मुहूर्तं [7]स्थितिर्भवति । अन्तर्मुहू-

१ तुला-भगवतीसूत्रवृत्तिः प. २७४ ॥ २ चनि० खं. ॥ ३ कलायास्त्रि० ख. सि. ॥ ४ ०श्चिपिटा-खं. ॥
५ ०काः-कोद्रवविशेषा -मु. ॥ ६ वरठत्ति-मु. । वरट्टीत्ति सि. ॥ ७ स्थितिर्भवेत्-वि. सि. ॥

र्ताच्च परतः स्वायुःक्षयादेवाचित्तता जायते; सा च परमार्थतोऽतिशयज्ञानेनैव सम्यक्परिज्ञायते, न छाद्मस्थिकज्ञानेनेति न व्यवहारपथमवतरति। अत एव च पिपासापीडितानामपि साधूनां स्वभावतः स्वायुःक्षयेणाचित्तीभूतमपि तडागोदकं पानाय **वर्धमानस्वामी** भगवान् नानुज्ञातवान् । इत्थंभूतस्याचित्तीभवनस्य छद्मस्थानां दुर्लक्षत्वेन मा भूत्सर्वत्रापि तडागोदके सचित्तेऽपि पाश्चात्यसाधूनां प्रवृत्तिप्रसङ्ग इति कृत्वा ॥९९१॥१०००॥१५४॥

इदानीं '**खेत्ताइयाणऽचित्तं**' ति पञ्चपञ्चाशदधिकशततमं द्वारमाह—

**जोयणसयं तु गंता अणहारेणं तु भंडसंकंतो ।**
**[1]वायागणिधूमेहि य विद्धत्थ होइ लोणाई ॥१००१॥**
**हरियालो मणसिल पिप्पली उ खज्जूर मुद्दिया अभया ।**
**आइन्नमणाइन्ना तेऽवि हु एमेव नायव्वा ॥१००२॥**
**आरुहणे ओरुहणे निसियण गोणाइणं च गाउम्हा ।**
**भोम्माहारच्छेओ उवक्कमेणं तु परिणामो ॥१००३॥**

[बृहत्कल्पभाष्ये गा. ९७३-५ । निशीथभाष्ये गा. ४८३३-५]

'**जोयणसयं तु**' गाहा, एकं योजनशतं गत्वा—अतिक्रम्य लवणादि विध्वस्तम्—अचित्तं भवति; केनेत्याह—अनाहारेण—स्वदेशजसाधारणाहाराभावेन । अयमर्थः—विवक्षितक्षेत्रादन्यत्र क्षेत्रे लवणादिकं यदा नीयते तदा तत्प्रतिदिनं विध्वस्यमानं २ तावद्गच्छति यावद्योजनशतम्; योजनशतादूर्ध्वं पुनर्भिन्नाहारत्वेन

१ वायागणिधूमेहिं-सि॰ निशीथभाष्ये च । वायागणि धूमेण—इति बृ॰ क॰ भाष्ये, धर्मसङ्ग्रहवृत्तौ [भा॰ १ प॰ ७७] च पाठः ॥

शीतादिसम्पर्कतश्चावश्यमचित्ती [1]भवतीति। केचित्तु योजनशतस्थाने गव्यूतशतं पठन्ति। यदुक्तं निशीथचूर्णौ 'केई पठंतिगाउयसयगाहा' [ भाष्यगाथा ४८३३, भा. ३, पृ. ५१६ ] इति ।

तथा 'भंडसंकंतो' ति प्राकृतत्वेन विभक्तिव्यत्ययात् भाण्डसङ्क्रान्त्या—पूर्वभाजनादपरभाजनप्रक्षेपणेन पूर्वभाण्डशालाया वाऽन्यभाण्डशालासञ्चारणेन वाता-ऽग्निधूमैश्च योजनशतमगतमपि स्वस्थानेऽन्तरे वा वर्तमानं लवणादिकमचित्तं भवतीति । इत्थं च क्षेत्रादिक्रमेणाचित्तीभवनं पृथिवीकायिका[2]दीनां वनस्पतिपर्यन्तानां सर्वेषामपि प्रतिपत्तव्यम् ॥१००१॥

अत एवाह—'हरियाले' त्यादि, हरितालादयः प्रतीता एव, नवरं [3]मुद्रिका--द्राक्षा, अभया--हरितकीः, एतेऽप्येवमेव ज्ञातव्याः, योजनशतात्परतः पूर्वोक्तैरेव हेतुभिरचित्तीभवन्तीति भावः । 'आइन्नमणाइन्न' त्ति योजनशतादागता अपि केचिदाचीर्णाः, केचित्पुनरनाचीर्णाः, तत्र पिप्पली-हरितक्यादय आचीर्णा अतो गृह्यन्ते, खर्जूर द्राक्षादयः पुनरनाचीर्णास्ततोऽ[4]चित्ता अपि न गृह्यन्ते इति ॥१००२॥

अथ लवणादीनामेवाचित्तताकारणाभिव्यञ्जनायाह—'आरुहणे' इत्यादि, तेषां लवणादीनामारोहणे--शकटगवादिपृष्ठादिष्वधिरोपणे सति, तथा अवरोहणे शकटादिभ्य एवावतारणे, तथा निषीदन्तीति नन्द्यादेराकृतिगणत्वाद्युप्रत्यये निषदना--लवणाद्युपरि निविष्टपुरुषाः, तेषां गवादीनां च गात्रोष्मणा; तथा यो यस्य लवणादेराहारो भौमादिः--पार्थिवादिस्तस्य व्यवच्छेदे च--अभावे सति, तथा उपक्रम्यते--बहु-

१ भवति-मु.॥ २ ०कानां-मु.॥ ३ मुद्रि (मृद्वी) का-इति धर्मसंग्रहवृत्तौ [ भा. १। प. ७८] पाठः। द्राक्षापर्याये तु मृद्वीका दृश्यन्ते न मुद्रिका, अभिधानचिन्तामणावपि-द्राक्षा तु गोस्तनी। मृद्वीका हारहूरा च (४।२२१-२२२)॥ ४ ० चित्तता-खं. वि ॥

कालवेद्यमप्यायुः स्तोकेनैव कालेन निष्ठां नियते अनेनेत्युपक्रमः--स्वकायशस्त्रादिः, तथाहि- किञ्चित्कस्यचित् स्वकायशस्त्रं यथा क्षारोदकं मधुरोदकस्यः किञ्चित्परकायशस्त्रं यथा ज्वलनो वनस्पतेः, किञ्चित्तूभयशस्त्रं यथा मृत्तिकामिश्रमुदकं शुद्धोदकस्यः तेन च परिणामः--अचित्तता भवति । सचित्त[1]मप्येतैः कारणैरचित्ततारूपेण परिणमतीत्यर्थः ॥१००३॥ १५५॥

इदानीं च 'धन्नाइ चउव्वीस' ति षट्पञ्चाशदधिकशततमं द्वारमाह—

[2]धन्नाइं चउवीसं जव १ गोहुम २ सालि ३ वीहि ४ सट्ठी ५ य ।
कोद्दव ६ अणुया ७ कंगू ८ रालय ९ तिल १० मुग्ग ११ मासा १२ य ॥१००४॥
अयसि १३ [3]हरिमंथ १४ [4]तिउडग १५ निप्फाव १६ सिलिंद १७ रायमासा १८ य ।
इक्खू १९ मसूर २० तुवरी २१ कुलत्थ २२ तह धन्नय २३ कलाया २४ ॥१००५॥

धान्यानि चतुर्विंशतिर्भवन्ति, यथा—यवाः १ गोधूमाः २ शालयो ३ व्रीहयः ४ षष्ठिकाः ५ कोद्रवा ६ अणुकाः ७ कङ्गुः ८ रालकः ९ तिला १० मुद्गा ११ माषाश्च १२ तथा अतसी १३ हरिमन्थाः १४ [5]त्रिपुटकाः १५ [6]निष्पावाः १६ शिलिन्दा १७ राजमाषा १८ [7]इक्षवः १९ मसूराः २० तुवर्यः २१ कुलत्था २२ स्तथा धान्यकं २३ कलायाः २४ इत्येतानि च प्रायेण लोकप्रसिद्धानि प्रागुक्तान्येव । नवरं

---

१ ०मप्येभिः–मु ॥ २ तुलना-धर्मसं. भा. १। प.६८॥ ३ हिरि० वि. । हरिमत्थ-सि.॥ ४ तिउगड मु.। तिउडउ-इति धर्मसं. वृत्तौ पाठः । तिउडग–जे.॥ ५ त्रिपुटिकाः-मु.सि. "त्रिपुटकोमालवकप्रसिद्धो धान्यविशेषः" इति धर्म सं.वृत्तौ। तुला–दशवै. वृत्ति. प. १३३॥ ६ निष्पावा वल्लाः–इतिधर्मसं. वृत्तौ ॥ ७ इक्षुर्बरट्टिका सम्भाव्यते–इति धर्म सं.वृत्तौ ॥

पष्टिकाः-शालिभेदाः[1] ये षष्टिरात्रेण पच्यन्ते, [2]अणुका-युगन्धरी,बृहच्छिरा कङ्गुः, अल्पतरशिरो रालकः, हरिमन्थाः-कृष्णचणकाः, शिलिन्दाः-मकुष्टाः, राजमाषाः - [3]चवलकाः, धान्यकं- [4]कुसुम्भरी, कलाया-अत्र वृत्तचणका इति ||१००४-५||१५६||

अधुना 'मरणं सत्तरसभेयं' ति सप्तपञ्चाशदधिकशततमं द्वारमाह-

आवीइ १ ओहि २ अंतिय ३ वलायमरणं ४ वसट्टमरणं च ५ ।
अंतोसल्लं ६ तब्भव ७ बालं ८ तह पंडियं ९ मीसं १० ||१००६||
छउमत्थमरण ११ केवलि १२ [5]वेहायस १३ गिद्धपिट्ठमरणं १४ च।
मरणं भत्तपरिन्ना १५ इंगिणि १६ पाओवगमणं च १७ ||१००७||
अणुसमयनिरंतरमा[6]विइसन्नियं तं भणंति पंचविहं ।
दव्वे खेत्ते काले [7]भवे य भावे य संसारे ||१००८||
एमेव ओहिमरणं जाणि मओ ताणि चेव मरइ पुणो ।
एमेव [8]होइ अंतियमरणं नवि मरइ ताणि पुणो ||१००९||
संजमजोगविसन्ना मरंति जे तं वलायमरणं तु ।
इंदियविसयवसगया मरंति जे तं वसट्टं तु ||१०१०||

१ ०दाः-मु. खं.|| २ "अणवो मिणाचवाख्या धान्यभेदा इति हैमद्व्याश्रयवृत्तौ, यद्वाऽणुका युगन्धरी इत्यपि क्वापि दश्यते ।" इति धर्म सं. वृत्तौ भाः १।प.६८|| ३ चपलकाः-इति धर्म सं वृत्तौ || ४ कसु० खं. कस्तु० इति दशवै. वृत्तौ पाठः || ५ वेहाणस-ता. सि वि. । उत्त. निर्युक्तावपि वेहाणस इति || ६० विति० ता. ०विस० सि. वि. || ७ भावे । य भवे वि || ८ आइ० मु. ||

गारवपंकनिवुड्डा अइयारं जे परस्स न [1]कहंति ।
दंसणनाणचरित्ते ससल्लमरणं हवइ तेसिं ॥१०११॥
मोत्तुं अकम्म[2]भूमियनरतिरिए सुरगणे य नेरइए ।
सेसाणं जीवाणं तब्भवमरणं च केसिंचि ॥१०१२॥

[उत्तराध्ययननिर्युक्तिः–२१२३-५-६-७-२१९-२२१]

मोत्तूण [3]ओहिमरणं आवीइ अंतियंतिय चेव ।
सेसा मरणा सव्वे तब्भवमरणेण नायव्वा ॥१०१३॥
अविरयमरणं बालं मरणं विरयाण पंडियं बिंति ।
जाणाहि बालपंडियमरणं पुण देसविरयाणं ॥१०१४॥
मणपज्जवोहिनाणी सुयमइनाणी मरंति जे समणा ।
छउमत्थमरणमेयं केवलिमरणं [4]तु केवलिणो ॥१०१५॥
गिद्धाइभक्खणं [5]गिद्धपिट्ठ उब्बंधणाइ वेहासं ।
एए दोन्निऽवि मरणा कारणजाए अणुन्नाया ॥१०१६॥

[उत्तराध्ययननिर्युक्तिः-२२२-४]

---

१ कहिंति-ता. ॥ २ भूमिं-ता । ३ ओहिमरणं आवी (ई) यतियंतियं चेव-मु. । ओहिमरणं मरणं आवीइ अंतियं चेव-ता. । ओहिमरणं आवीयं अंतियं तियं चेव-सि. । ओहिमरणं आवियं अंतियं तयं चेव-वि. ॥ ४ च-ता. ॥ ५ गद्धपिट्ठ-सि. ॥

मरणं भत्तपरिन्ना इंगिणि पायवगमणं च तिन्नि मरणाइं[१] ।
कप्पसमज्झिममजेट्ठा [१]धिइसंघयणेण उ [२]विसिट्ठा ॥१०१७॥

'आवीई' त्यादिगाथाद्वयम्, [३]मरणशब्दस्य प्रत्येकमभिसम्बन्धादावीचिमरणम्, अवधिमरणम्, 'अतिय' ति आत्यन्तिकमरणम्, आर्षत्वाच्चेत्थं निर्देशः, एवमुत्तरत्रापि । [४]'वलायमरणं' ति वलन्मरणम्, वशार्त्तमरणं च अन्तःशल्यमरणं तद्भवमरणं बालमरणं तथा पण्डितमरणं मिश्रमरणं छद्मस्थमरणं केवलिमरणम्, [५]'वेहायसं' ति वैहायसमरणं गृध्रपृष्ठं च मरणं 'भत्तपरिन्न' त्ति भक्तपरिज्ञामरणम्, इंगिनीमरणं पादपोपगमनमरणं चेति ॥१००६-७॥

एतानि क्रमशः स्वयमेव विवरीपुरावीचिमरणं तावदाह—'अणुसमय' गाहा, अनुसमयं—'समयं [६]समयमाश्रित्य, इदं च व्यवहितसमयाश्रयणतोऽपि भवतीति मा भूद्भ्रान्तिरत आह—निरन्तरम्—[७]न सान्तरमन्तरालाभावात्; किं तदेवंविधम् ?—'आवीचिसंज्ञितम्' आ—समन्तात् वीचय इव वीचयः—प्रतिसमय[८]मनुभूयमानायुषोऽपरापरायुर्दलिकोदयात्पूर्वपूर्वायुर्दलिकविच्युतिलक्षणा अवस्था यस्मिन् मरणे तदावीचि । तत आवीचीति संज्ञा सञ्जाता यस्मिन् तदावीचिसंज्ञितम्, तारकादित्वादितचि रूपमिदम्; अथवा वीचिः—विच्छेदस्तद[९]भावादवीचिः; दीर्घत्वं तु प्राकृतत्वात्; उभयत्र प्रक्रमान्मरणम्, तदेवम्भूतं

१ ठिइ-ता. ॥ २ वसिट्ठा–वि. ॥ ३ आद्वारं, तुलना-उत्तराध्ययनस्य शान्तिसूरिवृत्तिः प. २३० B तः ॥ ४ वलायन्मरणं-ता. वलाजन्म० सि ॥ ५ वेहाणसं–सि. वि. ३ । वैहाणसं-खं. ॥ ६ समय–मु. सि. नास्ति ॥ ७ असा० मु. । उत्तरा. वृत्तावपि-न सा० इति ॥ ८ ०मनुलोममनुभूय० वि. सि. । तुला–भगवतीसूत्रवृत्तिः प. ६२९ ॥ ॥ ९ ०मावोऽवीचिः-मु. । उत्तराध्ययनवृत्तौ समवायाङ्गवृत्तावपि च [प. ३४A] ०भावादवीचिः-इति पाठः ॥

प्रतिक्षणमायुर्द्रव्यविचटनलक्षणमावीचिमरणं पञ्चविधं भणन्ति तीर्थकर-गणधरादयोऽस्मिन् संसारे—जगति । पञ्चविधत्वमेवाह—द्रव्ये क्षेत्रे काले भवे [1]च भावे च; द्रव्याऽऽवीचिमरणं क्षेत्राऽऽवीमचिरणं कालाऽऽवीचिमरणं भवाऽऽवीचिमरणं भावाऽऽवीचिमरणं चेत्यर्थः । तत्र द्रव्याऽऽवीचिमरणं नाम यन्नारकतिर्यग्नरामराणामुत्पत्तिसमयात्प्रभृति निजनिजायुःकर्मदलिकानामनुसमयमनुभवनाद्विचटनम्; तच्च नारकादिभेदाच्चतुर्विधम्, एवं नारकादिगति[2]चातुर्विध्यापेक्षया तद्विषयं क्षेत्रमपि चतुर्विधम् । ततस्तत्प्राधान्यापेक्षया क्षेत्रावीचिमरणमपि चतुर्धैव । काल इति यथायुष्ककालो गृह्यते, न तु अद्धाकालस्तस्य देवादिष्वसम्भवात्; स च देवायुष्ककालादिभेदाच्चतुर्विधः, अतस्तत्प्राधान्यापेक्षया कालावीचिमरणमपि चतुर्विधमेव । नारकादिचतुर्विधभवापेक्षया भवावीचिमरणमपि चतुर्धैव; तेषामेव च नारकादीनां चतुर्विधायुःक्षयलक्षणभावप्राधान्यापेक्षया भावावीचिमरणमपि चतुर्धैवेति ॥१००८॥

[3]अथावधिमरणमाह—"[4]एमेवे'त्यादिगाथापूर्वार्द्धम्, एवमेव यथाऽऽवीचिमरणं द्रव्य-क्षेत्र-काल भव भावभेदतः पञ्चविधं तथेदमवधिमरणमपीत्यर्थः । तत्स्वरूपमाह—यानि मृतः सम्प्रतीति शेषः, तानि चैव 'मरइ पुण'त्ति तिङ्व्यत्ययेन मरिष्यति पुनः; किमुक्तं भवति ?—अवधिः—मर्यादा, ततश्च यानि नारकादिभवनिबन्धनतयाऽऽयुःकर्मदलिकान्यनुभूय म्रियते, पुनर्यदि तान्येवानुभूय मरिष्यति तदा द्रव्यावधिमरणम्; तद्द्रव्यापेक्षया पुनस्तद्ग्रहणा[5]वधि यावज्जीवस्य मृतत्वात् । सम्भवति हि गृहीतोज्झितानामपि कर्मदलिकानां पुनर्ग्रहणं परिणामवैचित्र्यादिति । एवं क्षेत्र-कालादिष्वपि भावना कार्या ।

१ च-मु. नास्ति ॥ २ ०चतु० खं. ॥ ३ अथावधि-मु. ॥ ४ एवमेवेत्यादि, एवमेव—मु. ॥
५ वधेर्या० मु. । ०वधिया० सि. वि. खं. प्रतौ भगवतीसूत्रवृत्तौ [प. ६२५] अपि ०वधिं० या इति ॥

**मरणं भत्तपरिन्ना इंगिणि पायवगमणं च तिन्नि मरणाइं ।**
**कन्नसमज्झिमजेट्ठा [1]धिइसंघयणेण उ [2]विसिट्ठा ॥१०१७॥**

'आवीई' त्यादिगाथाद्वयम्, [3]मरणशब्दस्य प्रत्येकमभिसम्बन्धादावीचिमरणम्, अवधिमरणम्, 'अतिय' ति आत्यन्तिकमरणम्, आर्षत्वाच्चेत्थं निर्देशः, एवमुत्तरत्रापि । [4]'**वलायमरणं**' ति वलन्मरणम्, वशार्त्तमरणं च अन्तःशल्यमरणं तद्भवमरणं बालमरणं तथा पण्डितमरणं मिश्रमरणं छद्मस्थमरणं केवलिमरणम्, [5]'**वेहायसं**' ति वैहायसमरणं गृध्रपृष्ठं च मरणं '**भत्तपरिन्न**' त्ति भक्तपरिज्ञामरणम्, इंगिनीमरणं पादपोपगमनमरणं चेति ॥१००६-७॥

एतानि क्रमशः स्वयमेव विवरीषुरावीचिमरणं तावदाह—'**अणुसमय**' गाहा, अनुसमयं—[6]समयं समयमाश्रित्य, इदं च व्यवहितसमयाश्रयणतोऽपि भवतीति मा भूद्भ्रान्तिरत आह—निरन्तरम्—[7]न सान्तरमन्तरालाभावात्; किं तदेवंविधम् ?—'आवीचिसंज्ञितम्' आ—समन्तात् वीचय इव वीचयः—प्रतिसमय[8]मनुभूयमानायुषोऽपरापरायुर्दलिकोदयात्पूर्वपूर्वायुर्दलिकविच्युतिलक्षणा अवस्था यस्मिन् मरणे तदावीचि । तत आवीचीति संज्ञा सञ्जाता यस्मिन् तदावीचिसंज्ञितम्, तारकादित्वादितच्चि रूपमिदम्; अथवा वीचिः—विच्छेदस्तद[9]भावादवीचिः; दीर्घत्वं तु प्राकृतत्वात्; उभयत्र प्रक्रमान्मरणम्, तदेवम्भूतं

१ ठिइ-ता. ॥ २ वसिट्ठा—वि. ॥ ३ आद्वारं, तुलना-उत्तराध्ययनस्य शान्तिसूरिवृत्तिःप. २३० B तः ॥ ४ वलायन्मरणंता वलाजन्म० सि ॥ ५ वेहाणस—सि. वि. ३ । वैहाणसं-खं. ॥ ६ समयं—मु. सि. नास्ति ॥ ७ असा० मु. । उत्तरा. वृत्तावपि-न सा० इति ॥ ८ ०मनुलोममनुभूय० वि. सि. । तुला—भगवतीसूत्रवृत्तिः प. ६२५ ॥ ॥ ९ ०भावोऽवीचिः-मु. । उत्तराध्ययनवृत्तौ समवायाङ्गवृत्तावपि च [प. ३४A] ०भावादवीचिः-इति पाठः ॥

प्रतिक्षणमायुर्द्रव्यविचटनलक्षणमावीचिमरणं पञ्चविधं भणन्ति तीर्थकर-गणधरादयोऽस्मिन् संसारे—जगति । पञ्चविधत्वमेवाह—द्रव्ये क्षेत्रे काले भवे [1]च भावे च; द्रव्याऽऽवीचिमरणं क्षेत्राऽऽवीमचिरणं कालाऽऽवीचिमरणं भवाऽऽवीचिमरणं भावाऽऽवीचिमरणं चेत्यर्थः । तत्र द्रव्याऽऽवीचिमरणं नाम यन्नारकतिर्यग्नरामराणामुत्पत्तिसमयात्प्रभृति निजनिजायुःकर्मदलिकानामनुसमयमनुभवनाद्विचटनम्; तच्च नारकादिभेदाच्चतुर्विधम्, एवं नारकादिगति[2]चातुर्विध्यापेक्षया तद्विषयं क्षेत्रमपि चतुर्विधम् । ततस्तत्प्राधान्यापेक्षया क्षेत्रावीचिमरणमपि चतुर्धैव । काल इति यथायुष्ककालो गृह्यते, न तु अद्धाकालस्तस्य देवादिष्वसम्भवात्; स च देवायुष्ककालादिभेदाच्चतुर्विधः, अतस्तत्प्राधान्यापेक्षया कालावीचिमरणमपि चतुर्विधमेव । नारकादिचतुर्विधभवापेक्षया भवावीचिमरणमपि चतुर्धैव; तेषामेव च नारकादीनां चतुर्विधायुःक्षयलक्षणभावप्राधान्यापेक्षया भावावीचिमरणमपि चतुर्धैवेति ॥१००८॥

[3]अथावधिमरणमाह—"एमेवे'त्यादिगाथापूर्वार्द्धम्, एवमेव यथाऽऽवीचिमरणं द्रव्य-क्षेत्र-काल भव भावभेदतः पञ्चविधं तथेदमवधिमरणमपीत्यर्थः । तत्स्वरूपमाह—यानि मृतः सम्प्रतीति शेषः, तानि चैव 'मरइ पुण'त्ति तिङ्व्यत्ययेन मरिष्यति पुनः; किमुक्तं भवति?—अवधिः--मर्यादा, ततश्च यानि नारकादिभवनिबन्धनतयाऽऽयुःकर्मदलिकान्यनुभूय म्रियते, पुनर्यदि तान्येवानुभूय मरिष्यति तदा द्रव्यावधिमरणम्; तद्द्रव्यापेक्षया पुनस्तद्ग्रहणा[5]वधिं यावज्जीवस्य मृतत्वात् । सम्भवति हि गृहीतोज्झितानामपि कर्मदलिकानां पुनर्ग्रहणं परिणामवैचित्र्यादिति । एवं क्षेत्र-कालादिष्वपि भावना कार्या ।

१ च-मु. नास्ति ॥ २ ०चतु० ख. ॥ ३ अथावधि-मु. ॥ ४ एवमेवेत्यादि, एवमेव—मु. ॥
५ वधेर्या० मु. । ०वधिया० सि. वि. खं. प्रतौ भगवतीसूत्रवृत्तौ [प. ६२५] अपि ०वधिं० या इति ॥

आत्यन्तिकमरणमाह—'एमेवे'त्यादिगाथोत्तरार्द्धम्, एवमेव—अवधिमरणवदात्यन्तिकमरणमपि द्रव्यादिभेदतः पञ्चविधम्; विशेषः पुनरयं—'नवि मरइ ताणि पुणो' त्ति अपिशब्दस्यैवकारार्थत्वान्नैव तानि—द्रव्यादीनि पुनर्म्रियते। अयमर्थः—यानि नरकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियते, मृतश्च न पुनस्तान्यनुभूय मरिष्यतीत्येवं यन्मरणं तद् द्रव्यापेक्षयाऽत्यन्तभावित्वादात्यन्तिकमिति। एवं क्षेत्रादिष्वपि वाच्यम् ॥१००९॥

वलन्मरणमाह—'संजमे' त्यादिगाथापूर्वार्द्धम्, संयमयोगाः—संयमव्यापारास्तैस्तेषु वा विषण्णाः संयमयोगविषण्णाः—अतिदुश्चरं तपश्चरणमाचरितुमक्षमाः व्रतं च कुलादिलज्जया मोक्तुमशक्नुवन्तः कथञ्चिदस्माकमितः कष्टानुष्ठानान्मुक्ति[1]र्भवत्विति विचिन्तयन्तो म्रियन्ते यच्च तद्वलतां-संयमानुष्ठानान्निवर्तमानानां मरणं वलन्मरणम्, तुशब्दो विशेषणार्थो भग्नव्रतपरिणतीनां व्रतिनामेवैतदिति विशेषयति। अन्येषां हि संयमयोगानामेवासम्भवात् कथं [2]तद्विषादः ?, तदभावे च कथं तदिति ॥

वशार्त्तमरणमाह—'इंदिये' त्यादिगाथोत्तरार्द्धम्, इन्द्रियाणां—चक्षुरादीनां विषया—मनोज्ञरूपादय इन्द्रियविषयाः, तद्वशं गताः—प्राप्ता इन्द्रियविषयवशगताः स्निग्धदीपकलिकावलोकनाकुलशलभवन्म्रियन्ते [3]येन तद्वशार्तमरणम्. वशेन—इन्द्रियविषयपारतन्त्र्येण ऋताः—पीडिता वशार्त्ताः, तेषां मरणमप्युपचाराद्वशार्त्तमुच्यते इति ॥१०१०॥

अन्तःशल्यमरणमाह—'गारवे' त्यादि, गौरवं—सातर्द्धिरसगौरवात्मकम्, तदेव कालुष्यहेतुतया

१ ०भविष्यति इति विचिन्तया ये च तद्वलनां—सि ॥ २ तद्विषयद.—खं. ॥
३ येन नास्ति-मु। यत्तद्वशार्तं० इति उत्तरा०वृत्तिः ॥

पङ्कः–कर्दमः, तस्मिन्निमग्नाः तत्क्रोडीकृततया अतिचारम्–अपराधं ये परस्य–आलोचनार्हस्याचार्यादेर्न कथयन्ति; मा भूदस्माकमालोचनार्हमाचार्यादिकमुपसर्पताम् ; [1]तद्वन्दनादिना-तदुक्ततपोऽनुष्ठानासेवनेन ऋद्धिरससाताभावसम्भव इति। उपलक्षणं चैतत्, ततो बहुश्रुतोऽहं तत्कथमल्पश्रुतोऽयं मम शल्यमुद्धरिष्यति ?, कथं चाहमस्मै वन्दनादिकं [2]दास्यामि ?, अपभ्राजनार्हीयं मम इत्यभिमानेन लज्जया वा–अनुचितानुष्ठानसंवरणस्वरूपया येऽतिचारं न कथयन्तीति। किं विषयमित्याह–दर्शन ज्ञान-चारित्रे–दर्शनज्ञान-चारित्रविषयम्; तत्र दर्शनविषयं शङ्कादि, ज्ञानविषयं कालातिक्रमादि, चारित्रविषयं समित्यननुपालनादि। शल्यमिव शल्यं कालान्तरेऽप्यनिष्टफलविधानं प्रत्यवन्ध्यतया सह तेन सशल्यम्, तच्च तन्मरणं च सशल्यमरणम्–अन्तःशल्यमरणं भवति तेषां–गौरवपङ्कनिमग्नानामिति ॥१०११॥

तद्भवमरणमाह—'मोत्तु' इत्यादि, मुक्त्वा–अपहाय, कान् ?–अकर्मभूमिजाश्च ते देवकुरूत्तरकुर्वादिषूत्पन्नतया नरतिर्यञ्चश्चाकर्मभूमिजनरतिर्यञ्चस्तान्; तेषां हि तद्भवानन्तरं देवेष्वेवोत्पादः। तथा सुरगणांश्च–सुरनिकायान्, किमुक्तं भवति ?–चतुर्निकायवर्तिनोऽपि देवान्, तथा निरयो–नरकस्तस्मिन् भवा नैरयिकास्तांश्च मुक्त्वेति सम्बन्धः; तेषां देवानां च तद्भवानन्तरं तिर्यग्मनुष्येष्वेवोत्पत्तेः, शेषाणाम्–एतदुद्धरितानां कर्मभूमिजनरतिरश्चां जीवानां-प्राणिनां तद्भवमरणम्; तेषामेव पुनस्तत्रोत्पत्तेः; तद्

१ तद्वन्दनादितदुक्त० मु.। उत्तराध्ययनवृत्तावपि ०नादिना तदुक्त इति ॥ २ दास्यामि ? अयं च ज्ञानहीनोऽयं वा मम सम इत्य०–मु.। दास्याम्यपभ्राजनार्ही नोयमम–खं.। दास्यामपभ्राजना हीनायं मम–सि.। दास्यामपभ्राजनाहीनोऽयं स मे इत्य० जे.। अपभ्राजना हि इय मम- इति उत्तरा.वृत्तिः।

विद्यते यस्मिन् भवे-तिर्यग्मनुष्यलक्षणे वर्तते जन्तुस्तद्भवयोग्यमेवायुर्बद्ध्वा पुनस्तत्क्षयेण म्रियमाणस्य भवति; तु-शब्दस्तेषामपि सङ्ख्येयवर्षायुषामेवेति विशेषख्यापकः; असङ्ख्येयवर्षायुषां हि युगलधार्मिकत्वादकर्मभूमिजानामिव देवेष्वेवोत्पादः, तेषामपि न सर्वेषाम्; किन्तु केषाञ्चित्तद्भवोपादानरूपमेवायुःकर्मोपचिन्वतामिति ॥१०१२॥

अत्रान्तरे' [1]'मोत्तूण ओहिमरणं' इत्यादिगाथा सूत्रे दृश्यते, न चास्या भावार्थः सम्यगवगम्यते, नाप्यसावुत्तराध्ययनचूर्ण्यादिषु व्याख्यातेत्युपेक्ष्यते ॥१०१३॥

सम्प्रति बाल-पण्डित-मिश्रमरणान्याह—'अविरये' त्यादि, विरमणं विरतं-हिंसा-ऽनृतादेरुपरमणम्, न विद्यते तद्येषां [2]तेऽमि अविरतास्तेषां-मृतिसमयेऽपि देशविरतिमप्यप्रतिपद्यमानानां मिथ्यादृशां सम्यग्दृशां [3]वा मरणमविरतमरणम्, तद् बाला इव बालाः--अविरतास्तेषां मरणं बालमरणमिति ब्रुवते इति सम्बन्धः। तथा विरतानां--सर्वसावद्यनिवृत्तिमभ्युपगतानां मरणं पण्डितमरणं ब्रुवते तीर्थकरगणधरादय इति। तथा जानीहि बालपण्डितमरण[4]मिति मिश्रमरणम्, पुनःशब्दः पूर्वापेक्षया विशेषद्योतनार्थः; [5]देशात्सर्वविरतविषयापेक्षया स्थूलप्राणिव्यपरोपणादेर्विरता देशविरतास्तेषां देशविरतानाम् ॥१०१४॥

एवं चरणद्वारेण बालादिमरणत्रयमभिधाय ज्ञानद्वारेण छद्मस्थमरण-केवलिमरणे [6]प्राह—'मणपज्जवो' इत्यादि, मनःपर्यायज्ञानिनोऽवधिज्ञानिनः श्रुतज्ञानिनो मतिज्ञानिनश्च म्रियन्ते ये श्रमणाः--तप-

१ आवीई इति गाथा-मु.॥ मोत्तुण ओहिमरणं ओहिमरणं इत्यादि-जे. सि.। मोत्तुण ओहिमरणं इत्यादि-खं.॥
२ तेऽवि० मु.। तेमीवि० खं. उत्तराध्ययनवृत्तावपि तेमी अवि० इति पाठः॥ ३ वा-खं. सि. नास्ति॥
४ ण मिश्र०-मु.। णमिति मिश्र० खं.॥ ५ देशा. सर्व० जे. सि.॥ ६ प्याह-सि वि.॥

स्थिनः, छादयन्तीति छद्मानि ज्ञानावरणादीनि कर्माणि, तेषु तिष्ठन्तीति छद्मस्थास्तेषां मरणं छद्मस्थमरणमेतत्। इह च प्रथमतो मनःपर्याय[1]निर्देशो विशुद्धिकृतप्राधान्याङ्गीकारेण चारित्रिण[2] एतदुपजायते इति स्वामिकृतप्राधान्यापेक्षया द्रष्टव्यम्; एवमवध्यादिष्वपि यथायोगं स्वधियैव हेतुर्वाच्य इति। तथा केवलमरणं केवलिनः–उत्पन्नकेवलज्ञानस्य सकलकर्मपुद्गलशाटनतो म्रियमाणस्य भवतीति ॥१०१५॥

साम्प्रतं **वैहायस-गृध्रपृष्ठमरणे** अभिधातुमाह–[3]'**गिद्धाई**' त्यादि, गृध्राः--प्रतीताः, ते आदिर्येषां शकुनिकाशिवादीनां तैर्भक्षणं गम्यमानत्वादात्मनस्तदनिवारणादिना तद्भक्ष्यकरि-करभादिशरीरानुप्रवेशेन च गृध्रादिभक्षणम्; तत्किमुच्यते ? इत्याह–'[4]**गिद्धपिट्ठ**' त्ति गृध्रैः स्पृष्टं–स्पर्शनं यस्मिन् तद् गृध्रस्पृष्टम्, यदि वा गृध्राणां भक्ष्यं पृष्ठमुपलक्षणत्वादुदरादि च मर्तुर्यस्मिन् तद् गृध्रपृष्ठम्; स ह्यलक्तकपूणिकापुटप्रदानेनात्मानं गृध्रादिभिः पृष्ठादौ भक्षयतीति। पश्चान्निर्दिष्टस्यापि [5]चास्य प्रथमतः प्रतिपादनमत्यन्तमहासत्त्वविषयतया कर्मनिर्जरां प्रति प्राधान्यख्यापनार्थम्।

'**उव्वंधणाइ वेहास**' मिति उद्–ऊर्ध्वं वृक्षशाखादौ बन्धनमुद्बन्धनम्, तदादिर्यस्य तरुगिरिभृगुप्रपातादेरात्मनैव[6] जनितस्य मरणस्य तदुद्बन्धनादि। '**वेहास**' मिति [7]प्राकृतत्वाद्यलोपे विहायसि–व्योमनि भवं वैहायसम्। उद्बद्धस्य हि विहायस्येव भवनमिति तत्प्राधान्यविवक्षयेत्थमुक्तमिति। नन्वेवं

१ निर्देशाद्विशु॰ मु.सि. ॥ २ ॰णि-सि.वि. ॥ ३ गद्धाइ गाहा-खं. ॥ ४ गद्धपट्ठ-ख. सि. वि. ॥ ५ तस्य-मु. सि. । तस्याः-जे. । चास्या-खं. । वि. प्रतौ उत्तराध्ययनवृत्तोऽपि चास्य-इति पाठः ॥ ६ ॰वात्मजनितस्य-खं. ॥
७ स्थानाङ्गवृत्तौ तु-प्राकृतत्वेन 'वेहाणस'-मित्युक्तमिति ॥

गृध्रपृष्ठस्याप्यात्मघातरूपत्वाद्वैहायस एवान्तर्भावः, सत्यमेतत् केवलमस्याल्प[1]सत्त्वैरध्यवसातुमशक्यत्व-ख्यापनार्थं भेदोपन्यासः । ननु—

△ 'भावियजिणवयणाणं ममत्तरहियाण नत्थि हु विसेसो ।
अप्पाणंमि परम्मि य तो वज्जे पीडमुभओऽवि ॥१॥ इत्यागमः ।

एते चानन्तरोक्ते मरणे अत्यन्तमात्मपीडाकारिणी इति कथं नागमविरोधः ?, अत एव च [2]भक्त-परिज्ञानादिषु पीडापरिहाराय—

❁ 'चत्तारि विचित्ताइं । विगईनिज्जूहियाइं चत्तारि ॥' [पञ्चव० ५७४]

इत्यादिसंलेखनाविधिः पानकादिविधिश्च तत्राभिहितः । दर्शनमालिन्यं चोभयत्रेत्याशङ्क्याह-एते-अनन्त-रोक्ते द्वे अपि-गृध्रपृष्ठवैहायसाख्ये मरणे 'कारण' त्ति प्राकृतत्वेन सप्तमीलोपात् कारणे-दर्शनमालिन्यपरि-हारादिके जाते-समुत्पन्ने यद्वा कारणजाते-कारणप्रकारे सति उदायिनृपानुमृततथाविधगीतार्थाचार्यव-दनुज्ञाते इत्यदोषः ॥१०१६॥

प्र. आ.
३००

सम्प्रति अन्त्यमरणत्रयमाह— [3]'मरण' मित्यादि, भक्तं--भोजनं तस्य परिज्ञानं परिज्ञा; सा द्विधा—ज्ञपरिज्ञा प्रत्याख्यानपरिज्ञा च । ज्ञपरिज्ञयाऽनेकविधमस्माभिर्भुक्तपूर्वमेतद्धेतुकं च सर्वमवद्यमिति परि-ज्ञानम्; प्रत्याख्यानपरिज्ञया च—

---

△ भावितजिनवचनाना ममत्वरहिताना नास्त्येव विशेषः आत्मनि च परस्मिश्च ततो वर्जयेत् पीडामुभयोरपि ॥१॥

❁ चत्वारि (वर्षाणि)विचित्राणि विकृतिनिर्यूढानि चत्वारि ॥

१ °सत्त्वैर्विधातु मु. । °सत्त्वैरध्यवसायितु° सि. वि. °सत्त्वैरध्यवसातु° खं. । तुलनीया-उत्तराध्ययनवृत्तिः [प. २३४] ॥ २ °ज्ञ नादिषु मु ॥ ३ भत्तपरिन्ना गाहा खं. ॥

❀ "सव्वं च असणपाणं चउव्विहं [1]जा य बाहिरो उवही ।
अब्भिन्तरं [2]च उवहिं जावज्जीवं च वोसिरइ ॥१॥" [महापच्चक्खाणपयन्नो गा. ३४]

इत्यागमवचनाच्चतुर्विधाहारस्य [3]त्रिविधाहारस्य वा यावज्जीवमपि परित्यागात्मकं प्रत्याख्यानं भक्तपरिज्ञोच्यते ।

तथा इङ्ग्यते–प्रतिनियतदेश एव चेष्ट्यतेऽस्यामनशनक्रियायामितीङ्गिनी । भक्तपरिज्ञायां हि त्रिविधं चतुर्विधं वाऽऽहारं प्रत्याचष्टे शरीरपरिकर्म च स्वतः [4]करोति परतश्च कारयति । इङ्गिन्यां तु नियमाच्चतुर्विधाहारविरतिः परपरिकर्मविवर्जनं च भवति; स्वयं पुनरिङ्गितदेशाभ्यन्तरे उद्वर्तनादि [5]चेष्टात्मकं परिकर्म यथासमाधि विदधात्यपीति विशेषः । तथा पादैः–अधःप्रसर्पिमूलात्मकैः पिबतीति पादपो–वृक्षः । उपशब्दश्चौपम्ये उपमेयेऽपि सादृश्येऽपि च दृश्यते । ततश्च पादपमुपगच्छति–सादृश्येन प्राप्नोतीति पादपोपगमनम्; किमुक्तं भवति ?–यथैव पादपः क्वचित्कथञ्चिन्निपतितः [6]सममसममिति वा अविभावयन् निश्चल एवास्ते, तथा अयमपि भगवान् यद्यथा समविषमदेशेऽङ्गमुपाङ्गं वा प्रथमतः पतितं न तत्तच्चलयतीति । इह चैवंविधानशनोपलक्षितानि मरणान्यप्येवमुक्तानि । अत एवाह--त्रीणि मरणानि ।

---

❀ सर्वं चाशनपानं चतुर्विधं यश्च बाह्य उपधिः । अभ्यन्तरं च उपधिं यावज्जीवं च व्युत्सृजति ॥१॥

१ जो–मु प्रकीर्णके च ख. । वि. सि. उत्तराध्ययनवृत्तावपि जा-इति पाठः ॥ २ चउविहं–मु. । खं. सि. प्रत्योः प्रकीर्णके उत्तराध्ययन-वृत्तावपि च उवहिं--इति पाठः ॥ ३ त्रिविधाहारस्य–इति पाठ उत्तराध्ययनवृत्तौ [प.२३५A] नास्ति । तत्रैव टिप्पने 'वाशब्दः पूर्वगाथोक्तसोपध्याहारत्यागसूचार्थः ।' इति ॥ ४ करोति–खं.वि.सि. नास्ति ॥ ५ चेष्टादिकं–ख. ॥ ६ सममसम वा-मु. । समविसम वा-सि.वि. । सममसममिति चावि० इति उत्तराध्ययनवृत्तौ पाठः ॥

अथैतेषामेव त्रयाणां मरणानां किञ्चित् स्वरूपमाह—'कन्नस'त्ति सूत्रत्वात् कनिष्ठं-लघु जघन्यमिति-यावत्, मध्यमं—लघु-ज्येष्ठयोर्मध्यभावि, ज्येष्ठम्--अतिशयवृद्धमुत्कृष्टमित्यर्थः । तत एतेषां द्वन्द्वे कनिष्ठ-मध्यम-ज्येष्ठानि यथासङ्ख्येन त्रीण्यपि मरणान्यवसेयानि । तथा 'धिइ' त्ति धृतिः—संयमं प्रति चित्तस्वास्थ्यम्, संहननं—शरीरसामर्थ्यहेतुर्वज्रऋषभनाराचादि; ततः समाहारद्वन्द्वे धृति-संहननं तेन विशिष्टान्येतानि । इदमुक्तं भवति—यद्यपि त्रितयमप्येतत्—-

△ धीरेणवि मरियव्वं [1]काउरिसेणावि अवस्स मरियव्वं । तम्हा अवस्समरणे वरं खु धीरत्तणं[2] मरिउं ॥१॥'

इत्यादिभावनातः शुभाशयवानेव प्रतिपद्यते, फलमपि च वैमानिकता मुक्तिलक्षणं च त्रयस्यापि समानम्, तथा चोक्तम्—

★"एयं पच्चक्खाणं अणुपालेऊण सुविहिओ सम्मं । वेमाणिओ व देवो हविज्ज अहवावि [3]सिज्झिज्जा ॥१॥"

तथापि विशिष्ट-विशिष्टतर विशिष्टतमधृतिमतामेव [4]तत्प्राप्तिरिति ज्येष्ठत्वादिस्तद्विशेष उच्यते । तथाहि—भक्तपरिज्ञामरणमार्यिकादीनामप्यस्ति । यत उक्तम्—

∠"सव्वावि य अज्जाओ सव्वेवि य पढमसंघयणवज्जा । सव्वेवि देसविरया पच्चक्खाणेण उ मरंति ॥१॥"

[निशीथभाष्य गाथा ३६१८]

---

△ धीरेणापि मर्तव्यं कापुरुषेणाप्यवश्य मर्तव्य । तस्मादवश्यमरणे धीरत्वेनैव मर्तुं वरम् ॥१॥

★ एतत् प्रत्याख्यानमनुपाल्य सुविहितः सम्यक् । वैमानिको देवो वा भवेत् अथवापि सिध्येत् ॥

∠ सर्वा अपि चार्या. सर्वेऽपि च प्रथमसंहननवर्जाः । सर्वेऽपि देशविरताः प्रत्याख्यानेनैव म्रियन्ते ॥१॥

१ कापुरि-मु. ॥ २ ०णं-मु. ॥ ३ सिज्झेज्ज-खं. ॥ ४ च तत्प्रा० मु. । खं. सि. वि. उत्तराध्ययनवृत्तावपि च-नास्ति ॥

अत्र च प्रत्याख्यानशब्देन भक्तपरिज्ञैव भणिता । तत्र प्राक् ❀ पादपोपगमादेरन्यथा भणनात्, इङ्गिनीमरणं तु विशिष्टतरधृतिसंहननवतामेव भवतीत्यार्यिकादिनिषेधत एवावसीयते । ❀ पादपोपगमनं तु नाम्नैव विशिष्टतमधृतिमतां वज्रर्षभनाराचसंहननिनामेव [1]भवति । उक्तं च—

△ "पढमंमि य संघयणे वट्टंते सेलकुड्डसामाणा[2] ।
तेसिंपि य वोच्छेओ चोद्दसपुव्वीण वोच्छेए ॥१॥ इति । [व्यवहारभा. उ. १०।गा. ५७]

तीर्थकरसेवितत्वाच्च पादपोपगमनस्य ज्येष्ठत्वम्; इतरयोश्च [3]विशिष्टसाधुसेवितत्वादन्यथात्वम्, यतोऽभ्यधायि—

"^ सव्वे सव्वद्धाए सव्वन्नू सव्वकम्मभूमीसु । सव्वगुरू सव्वमहिया सव्वे मेरुम्मि अभिसित्ता ॥१॥
सव्वाहिं लद्धीहिं सव्वेऽवि परिसहे पराजित्ता । सव्वेवि य तित्थयरा पाओवगया उ सिद्धिगया ॥२॥
अवसेसा अणगारा तीयपडुप्पन्नऽणागया सव्वे । केई पाओवगया पच्चक्खाणिंगिणी केई ॥३॥"
[व्यवहारभाष्ये उ. १० । गा.५२४-६] इति ।

---

❀❀ चिह्नद्वयमध्यवर्ती पाठः खं. नास्ति ॥ १ च भ० मु. ॥ २ ०णे इति उत्तराध्ययन वृत्तौ [प. २३६] पाठः ॥
△ प्रथमे च संहनने वर्त्तमाने शैलकुडयसमानाः । तेषामपि च व्युच्छेदश्चतुर्दशपूर्विणां व्युच्छेदे ॥१॥
३ ०श्चावि० इति उत्तराध्ययनवृत्तौ पाठः ॥
^ सर्वे सर्वाद्धायां सर्वज्ञाः सर्वकर्मभूमिषु सर्वगुरवः सर्वमहिताः सर्वे मेरौ अभिषिक्ताः ॥१॥
सर्वाभिर्लब्धिभिर्युक्ताः । सर्वानपि च परिषहान् पराजित्य । सर्वेऽपि च तीर्थकराः पादपोपगताः सिद्धिगताः ॥२॥
अवशेषा अनगाराः अतीतप्रत्युत्पन्नानागताः सर्वे । केचित् पादपोपगताः प्रत्याख्यानिन इङ्गिनश्च केचित् ॥३॥

तस्माद्भक्तपरिज्ञानं कनिष्ठम्, इङ्गिनीमरणं मध्यम्, पादपोपगमनं तु ज्येष्ठमिति ॥१०१७॥१५७॥

१५८ द्वारे
पल्योपम-
स्वरूपं
गाथा
१०१८-
१०२६
प्र. आ.
३०२

इदानीं 'पलिओवमं' इत्यष्टपञ्चाशदधिकशततमं द्वारमाह—

[1]पलिओवमं च तिविहं उद्धारऽद्धं च खेत्तपलियं च ।
एक्केक्कं पुण दुविहं बायरसुहुमं च नायव्वं ॥१८॥
जं जोयणविच्छिन्नं तं तिउणं परिरएण सविसेसं ।
तावइयं उव्विद्धं पल्लं पलिओवमं नाम ॥१९॥
एगाहियबेहियतेहियाण उक्कोस सत्तरत्ताणं ।
सम्मट्ठं संनिचियं भरियं बालग्गकोडीणं[2] ॥२०॥ [ज्योतिष्करण्डे गा. ७६]
तत्तो समए समए [3]एक्विक्के अवहियंमि जो कालो ।
संखिज्जा खलु समया बायरउद्धारपल्लंमि ॥२१॥
एक्केक्कमओ लोमं कट्टुमसंखिज्जखंडमद्दिस्सं ।
समछेयाणंतपएसियाण पल्लं भरिज्जाहि ॥२२॥
तत्तो समए समए [4]एक्केक्के अवहियंमि जो कालो ।
संखिज्ज वासकोडी सुहुमे उद्धारपल्लंमि ॥२३॥

---

१ एतद् गाथाष्टकम् (१०१८-२५) बृहत्सङ्ग्रहणी-मलयगिरिवृत्तावपि (प ८) दृश्यते ॥
२ हिं-मु. । तुला-अनुयोगद्वारे सू. ३७४, ज्योतिष्करण्डके गाथा ७९॥
३ इक्किक्के-मु. । एक्केक्के-इति जीवसमासे पाठः ॥ ४ एक्केक्के अविहियंमि जो कालो-ता. ॥

वाससए वाससए एक्केक्के बायरे अवहियंमि ।
बायरअद्धापलियं संखेज्जा वासकोडीओ ॥२४॥
वाससए वाससए एक्केक्के अवहियम्मि सुहुमंमि ।
सुहुमं अद्धापलियं हवंति वासा असंखिज्जा ॥२५॥
बायरसुहुमायासे खेत्तपएसाणुसमयमवहारे ।
बायरसुहुमं खेत्तं उस्सप्पिणीओ असंखेज्जा ॥२६॥ [तुलना-जीवसमास-गा. ११७-१८-१९-२०-२१-२२-२५-२६-३१]

'पलिओवमं' इत्यादिगाथानवकम्, पल्यो-वर्तुलाकृतिर्धान्याधारविशेषः, [1]पल्यवत्पल्यः-पुरस्ताद्वक्ष्यमाणस्वरूपः तेनोपमा यत्र कालप्रमाणे तत्पल्योपमम् । तच्च त्रिधा-उद्धारपल्योपमम्, अद्धापल्योपमं क्षेत्रपल्योपमं च । तत्र वक्ष्यमाणस्वरूपवालाग्राणां तत्खण्डानां चोद्धारेण द्वीप-समुद्राणां वा प्रतिसमयमुद्धरणम्-अपहरणमुद्धारः, तद्विषयं तत्प्रधानं वा पल्योपममुद्धारपल्योपमम् । तथा अद्धा-कालः स चेह प्रक्रमाद्वक्ष्यमाणवालाग्राणां तत्खण्डानां वा प्रत्येकं वर्षशतलक्षण उद्धारकालो गृह्यते । अथवा प्रस्तुताद्धापल्योपमपरिच्छेद्यो नारकाद्यायुष्कलक्षणः कालोऽद्धा, तत्प्रधानं तद्विषयं वा पल्योपममद्धापल्योपमम् । तथा क्षेत्रं-विवक्षिताकाशप्रदेशस्वरूपं तदुद्धारप्रधानं पल्योपमं क्षेत्रपल्योपमम् । एतेषां च मध्ये

१ तुलना-जीवसमासप्रकरणं प. १०९ तः। बृहत्सङ्ग्रहणी-मलयगिरिवृत्तिः प. ६ तः ॥

सम्प्रति 'वेयण' त्ति चतुःसप्तत्यधिकशततमं द्वारमाह—

**[1]'सत्तसु खेत्तसहावा अन्नोऽन्नुदीरिया य जा छट्ठी ।**
**तिसु आइमासु वियणा परमाहम्मियसुरकया य ॥७४॥**

**'सत्त०'** गाहा, क्षेत्रस्वभावा—क्षेत्रस्वभावसमुद्भूता दुःखवेदना तावदविशेषेण सप्तस्वपि नरकपृथिवीषु भवति । **'अन्नोऽन्नुदीरिया य जा छट्ठी'** त्ति यावच्छब्दोऽयमव्ययत्वेनानेकार्थत्वादिह मर्यादावाची । ततोऽन्यो-ऽन्योदीरिता—नारकैरेव परस्परमुपजनिता वेदना षष्ठीं पृथिवीं यावत्—षष्ठ्या अर्वाक्पञ्चमीमभिव्याप्य भवतीति । इदमुक्तं भवति—अन्योऽन्योदीरिता वेदना द्विधा—प्रहरणकृता शरीरकृता च । तत्र प्रहरणकृता आद्यास्वेव पञ्चसु पृथिवीषु भवति; शरीरकृता तु सामान्येन सप्तस्वपि पृथिवीषु । न चैतदनार्षम् । तथा चोक्तं **जीवाभिगमोपांगे** —

△"इमीसे णं भंते ! रयणप्पभाए पुढवीए नेरइया जाव एगत्तंपि पहू विउव्वित्तए पुहुत्तंपि पहू विउव्वित्तए', एगत्तं विउव्वमाणा एगं महं मुग्गररूवं वा, [2]एवं [3]करवत्त-असि-सत्ति-हल-गया-मुसल-चक्क-नाराय-कुंत-तोमर-सूल-लगुडजाव भिंडिमालरूवं वा, पुहुत्तं [4]विउव्वमाणा मुग्गररूवाणि वा जाव भिंडमालरूवाणि वा, ताइं संखेज्जाइं नो असंखेज्जाइं संबद्धाइं नो असंबद्धाइं सरिसाइं नो असरिसाइं

१ तुलना-बृहत्सं. वृत्तिः प. १७ A ॥ २ मुसुढीरूवं वा एव—मु. ॥ ३ करवत्ति०—सि.वि. ॥ ०४ विउव्वे० मु. ॥
△ "अस्यां भदन्त ! रत्नप्रभायां पृथिव्यां नैरयिका यावद् एकत्वमपि प्रभुर्विकुर्वितुं पृथक्त्वमपि प्रभुर्विकुर्वितुम् ?,

विउव्वंति । विउव्वित्ता अन्नमन्नस्स कायं अभिभवमाणा वेयणं उदीरयन्ति,... एवं जाव धूमप्पभाए पुढवीए, छट्ठसत्तमासु णं पुढवीसु नेरइया लोहियकुंथुरूवाइं वइरामयतुंडाइं गोमयकीडसमाणाइं विउव्वित्ता अन्नमन्नस्स कायं समतुरंगेमाणा २ खाएमाणा २ सयपोराकिमिया इव चालेमाणा चालेमाणा अन्तो अन्तो अणुप्पविसमाणा वेयणमुदीरयंति'' त्ति [तुलना· सू. ८९, प. ११७ A तः]।

अत्र पृथक्त्वशब्दो बहुत्ववाची, ततः पृथक्त्वं—प्रभूतानि मुद्गरादीनि भिण्डिमालपर्यन्तानि प्रहरणानि विकुर्वन्तः परिमितानि स्वशरीरसंलग्नानि समानरूपाणि च विकुर्वन्ति । असङ्ख्यातानां स्वशरीर[1]पृथग्भूतानां विसदृशानां च प्रहरणानां विकुर्वणे तथाभवस्वाभाव्येन सामर्थ्याभावात् । [2]**'समतुरङ्गेमाणा समतुरङ्गेमाणा'** इति समतुरङ्गा इवाचरन्तः समतुरङ्गायमाणाः; अश्वा इवान्योऽन्यमारोहन्त इत्यर्थः । शतपर्वकृमय इव—इक्षुकृमय इव **'चालेमाणा चालेमाणा'** शरीरमध्येन सञ्चरन्तः सञ्चरन्त इति ॥

एकत्वं विकुर्वन्त एकं महत मुद्गररूप वा मुषण्ढीरूप वा एवं करपत्रा-ऽसि शक्ति-हल-गदा-मुशल-चक्र-नाराचकुन्त-तोमर-शूल-लकुटयावत् भिण्डिमालरूपं वा, पृथक्त्वं विकुर्वन्तो मुद्गररूपाणि वा यावद् भिण्डिमालरूपाणि वा, तानि सङ्ख्येयानि नासङ्ख्येयानि, सम्बद्धानि नासम्बद्धानि, सदृशानि नासदृशानि विकुर्वन्ति । विकुर्व्य अन्योऽन्यस्य कायमभिभवन्तो वेदनामुदीरयन्ते । एवं यावद् धूमप्रभायां पृथ्व्याम्, षष्ठी-सप्तम्योः पृथ्व्योर्नैरयिका लौहितकुन्थुरूपाणि वज्रमयतुण्डानि गोमृतककीटसमानानि विकुर्व्य अन्योऽन्यस्य कायं समतुरङ्गायमाणा २ खादन्तः २ शतपर्वकृमय इव चालयन्तः २ अन्तरन्तरनुप्रविशन्तो वेदनामुदीरयन्ते ॥

१ पृथग्जातानां—वि. सि. ॥ २ समतुरंगेणमाणा-सि. वि. ॥

तथा [1]तिसृष्वाद्यासु पृथिवीषु परमाधार्मिकसुरकृताऽपि वेदना भवति । तत्र क्षेत्रस्वभावजा (ग्रन्थाग्रं-१३००० ) रत्नप्रभा-शर्कराप्रभा-वालुकाप्रभासूष्णा । एतन्नारकाणां हि शीतयोनिकत्वेन केवलं हिमप्रतिम-शीतप्रदेशात्मकत्वात् योनिस्थानादन्यत्र च सर्वस्यापि भूम्यादेः खदिराङ्गारेभ्योऽप्यत्यन्तप्रतप्तत्वाद् गाढतर उष्णवेदनानुभवः; एवमन्यास्वपि वाच्यम्, पङ्कप्रभायां बहुषूपरितनेषु नरकावासेषूष्णा अधस्तनेषु स्तोकेषु च शीता; धूमप्रभायां बहुषु शीता स्तोकेषूष्णा; षष्ठ्यां सप्तम्यां च पृथिव्यां केवला [2]शीत-वेदनैव । इयं च वेदना सर्वाऽप्यधोऽधोऽनन्तगुणतया तीव्रा तीव्रतरा तीव्रतमा चावसेया ।

**उष्णवेदनायाः शीतवेदनायाश्च स्वरूपं** पुनरित्थं प्रदर्शयन्ति प्रवचनवेदिनः—यथा निदाघचरम-समयमध्याह्ने नभोमध्यमधिरूढे प्रौढे चण्डरोचिषि, सर्वथाऽपि जलदपटलविकले गगनतले, मनागप्यस्फुरति [3]मरुति, प्रभूतपित्तकोपाभिभूतस्य, कृतातपवारणनिवारणस्य, सर्वतः प्रज्वलज्ज्वलन[4]ज्वालाकरालितकले-वरस्य कस्यचित्पुंसः किल वाक्पथातीतसंवेदना यादृगुष्णवेदना प्रादुर्भवति ततोऽप्युष्णवेदनेषु नरकेषु नारकाणामनन्तगुणा । अपिच—यदि नारका उष्णवेदनेभ्यो नरकेभ्य उत्पाट्य धमनीमुखोध्मायमानखादिरा-ङ्गारराशिशय्याशायिनः क्रियन्ते तदा [5]सुधारससेकातिरेकनिर्वाप्यमाणा इवात्यन्तसुखास्वादमेदुरमनसो निद्रामपि लभेरन् ।

तथा पौषे माघे वा निशीथे सर्वथाऽप्यभ्रविभ्रमविरहितेऽपि वियति सर्वतोऽपि [6]वपुःप्रकम्पकृति प्रवाति

१ लोकप्रकाशः १४/२२० पश्चात् द्रष्टव्यः ॥ २ शीता-मु. ॥ ३ मारुति-मु. ॥ ४ ०जाल जालकारा० खं. ॥ ५ सुधासारस० ख. वि. ॥ ६ वपुः प्रकम्पः संपत्कृति-खं.वि. । वपुः प्रकंपसंपत्कृति-सि. ॥

वाते तुषारशिखरिशिखरकृतस्थितेस्तुहिनकणगणसम्पर्किणो निरग्नेर्निराश्रयस्य निरावरणस्य पुंसो या शीतवेदना ततो भवति शीतवेदनेषु नारकाणामनन्तगुणा । किञ्च—यदि ते नारकाः शीतवेदनेभ्यो नरकेभ्य उत्पाट्य यथोक्तपुरुषस्थाने स्थाप्यन्ते तदा ते प्राप्तात्यन्तनिर्वातस्थाना इव निरुपमसुखसम्पत्तेर्निद्रामप्यासादयेयुरिति ।

तथा क्षुत्पिपासाकण्डूपारवश्यज्वरदाहभयशोकादिकाऽन्याऽपि नारकाणां वेदना श्रुते श्रूयते । तथाहि—ते नारकाः सर्वदैवाक्षयक्षुदग्निदह्यमानशरीराः सकलजगद्गतसुस्निग्धघृतादिपुद्गलाहारेणापि न तृप्यन्ति । पिपासाऽपि[1] तेषां शश्वत्कण्ठोष्ठतालुजिह्वादिशोषकृन्निखिल[2]पयोधिपयःपानेऽपि नोपशाम्यति । कण्डूः पुनः कण्डूयमाना क्षुरिकादिभिरप्यनुच्छेद्या । पारवश्य-ज्वर-दाह-भय-शोकादयोऽप्यत्रत्येभ्योऽनन्तगुणाः । यदपि च नारकाणामवधिज्ञानं विभङ्गज्ञानं वा तदपि तेषां दुःखकारणम् । ते हि दूरत एव तिर्यगूर्ध्वमधश्च निरन्तरं दुःखहेतुमापतन्तमालोकयन्ति; आलोक्य च भयेन कम्पमानकायाः सोद्वेगमवतिष्ठन्ते । इयं सर्वाऽपि क्षेत्रस्वभावजा दुःखवेदना ।

अथ परस्परोदीरिता प्रतिपाद्यते—इह द्विविधा नारकाः—सम्यग्दृष्टयो मिथ्यादृष्टयश्च । तत्र ये मिथ्यादृष्टयस्ते मिथ्याज्ञानावलिप्तचेतसः परमार्थमजानानाः परस्परमुदीरयन्ति दुःखानि । ये तु सम्यग्दृष्टयस्ते तु नूनमस्माभिः कृतं जन्मान्तरेऽपि तत्किमपि पापं प्राणिहिंसादिरूपं येन निमग्ना वयं परमदुःखाम्भोधाविति परिभावयन्तः सहन्ते सम्यक्परोदीरितानि दुःखानि, न पुनरन्येषामुत्पादयन्ति;

१ ०ऽपि-खं नास्ति ॥ २ ०पयोनिधि० वि. सि. ॥

दृष्टनिजकर्मविपाकत्वात् । अत एव च ते मिथ्यादृष्टिभ्योऽधिकतरदुःखाः [1]प्रवचने प्रतिपाद्यन्ते; भूयिष्ठतया मानसिकदुःखसम्भवात् ।

येऽपि च मिथ्यादृष्टयः परस्परमुदीरयन्ति दुःखानि तेऽप्येवं-यथेह जगत्यपूर्वाद् ग्रामान्तरादागच्छतः शुनो दृष्ट्वा तद्ग्रामवास्तव्याः श्वानो निर्दयं क्रुद्ध्यन्ति परस्परं प्रहरन्ति च, तथा नारका अपि विभङ्गज्ञानबलेन दूरत एवान्योऽन्यमालोक्य क्रोधान्धा वैक्रियं भयानकं रूपमाधाय तेष्वेव स्वस्वनरकावासेषु क्षेत्रानुभावजनितानि पृथिवीपरिणामरूपाणि शूल-शिला-मुद्गर-कुन्त-तोमर-खड्ग-यष्टि-परशुप्रभृतीनि प्रहरणानि वैक्रियाणि वाऽऽदाय तैः कर-चरण-दशनैश्च परस्परमभिघ्नन्ति; ततः परस्पराभिघाततो विकृताङ्गा निस्स्वनन्तो गाढवेदनाः सूनान्तःप्रविष्टमहिषादय इव रुधिरकर्दमे विचेष्टन्ते । एवमादिकाः परस्परोदीरिता दुःखवेदनाः ।

परमाधार्मिककृतास्तु तप्तत्रपुपान-तप्तायोमयस्त्रीसमालिङ्गन-कूटशाल्मल्यग्रारोपण-अयोघनाघात-वास्यादितक्षणक्षतक्षारोष्णतैलक्षेपण-कुन्तादिप्रोतन-भ्राष्ट्रभर्जन-यन्त्रपीलन--करपत्रपाटन- वैक्रियानेक[2]कंकोलूकसिंहादिकदर्थन-तप्तवालुकावतारण -असिपत्रवनप्रवेशन-वैतरणीतरङ्गिणीप्लावन--परस्परायोधनादिजनिता अपरिमिताः समयसमुद्रादवगन्तव्याः । किञ्च-कुम्भीषु पच्यमानास्तीव्रतापात्ते नारका उत्कर्षतः पञ्च योजनशतान्यूर्ध्वमुच्छलन्ति । तथा चोक्तं जीवाभिगमे—

---

१ भगवतीसू. १।२। सू. २१ द्रष्टव्यम् ॥ २ ०कांकोलूक० मु. ॥

△'नेरइयाणुप्पाओ उक्कोसं पंच जोयणसयाइं । दुक्खेणऽभिहुयाणं वेयण[1]सयसंपगाढाणं ॥१॥'
[ सू. ६५, गा. ७, प. १२६ A ]

पतन्तश्च विकुर्वितैर्वज्रतुण्डैरण्डजैरन्तराले त्रोटिभिस्त्रोट्यन्ते, किञ्चिच्छेषास्तु भूमिपतिता व्याघ्रादिभिर्विलुप्यन्त इति ॥७४॥१७४॥

इदानीम् 'आउ' त्ति पञ्चसप्तत्यधिकशततमं द्वारमाह--

**सागरमेगं १ तिय २ सत्त ३ दस ४ य सत्तरस ५ तह य बावीसा ६ ।**
**तेत्तीसं ७ जाव ठिई सत्तसु पुढवीसु उक्कोसा ॥ ७५ ॥**
**जा पढमाए जेट्ठा सा बीयाए कणिट्ठिया भणिया ।**
**तरतमजोगो एसो दसवाससहस्स रयणाए ॥ ७६ ॥** [ बृहत्सं. जिनभद्रीया गा. २३३-४]

**'सागरमेगं'** गाहा, [2]सप्तस्वपि नरकपृथिवीष्वियं यथासङ्ख्यमुत्कृष्टा स्थितिः; तद्यथा—रत्नप्रभायां पृथिव्यां सागरोपममेकमुत्कृष्टा स्थितिः, शर्कराप्रभायां त्रीणि सागरोपमाणि[3], वालुकाप्रभायां सप्त, पङ्कप्रभायां दश, धूमप्रभायां सप्तदश, तमःप्रभायां द्वाविंशतिः, तमस्तमःप्रभायां त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिरिति ॥ ७५ ॥

सम्प्रति **सप्तस्वपि पृथिवीषु जघन्यां स्थितिमाह — 'जा पढमाए'** गाहा, या प्रथमायां—

---

△ नैरयिकाणामुत्पात उत्कृष्टतः पञ्च योजनशतानि । दुःखेनाभिद्रुतानां वेदनाशतसंप्रगाढानाम् ॥१॥

१ ०समय० खं. वि. सि. ॥ २ तुलना-बृहत्संग्रहणीवृत्तिः प. ८६ B तः ॥ ३ ०नि–खं. सि. वि. । एवमग्रेऽपि ॥

रत्नप्रभायां ज्येष्ठा-उत्कृष्टा स्थितिरेकसागरोपमलक्षणा सा द्वितीयायां पृथिव्यां शर्कराप्रभाभिधानायां कनिष्ठा–जघन्या भणिता । एष तरतमयोगो–जघन्योत्कृष्टस्थितियोगः सर्वास्वपि पृथिवीषु भावनीयः । तद्यथा–या द्वितीयायामुत्कृष्टा सा तृतीयायां जघन्या, या तृतीयायामुत्कृष्टा सा चतुर्थ्यां जघन्या, एवं या षष्ठ्यामुत्कृष्टा सा सप्तम्यां जघन्या; रत्नप्रभायां प्रथमपृथिव्यां जघन्या स्थितिर्दश वर्षसहस्राणीति । अयमभिप्रायः–प्रथमपृथिव्यां रत्नप्रभायां जघन्या स्थितिर्दश वर्षसहस्राणि, शर्कराप्रभायामेकं सागरोपमम् , वालुकाप्रभायां त्रीणि सागरोपमाणि, पङ्कप्रभायां सप्त, धूमप्रभायां दश, तमःप्रभायां सप्तदश, तमस्तमःप्रभायां कालादिषु चतुर्षु नरकावासेषु द्वाविंशतिसागरोपमाणि जघन्या स्थितिः । जघन्योत्कृष्टान्तरालवर्तिनी[1] तु स्थितिः सर्वत्रमध्यमा बोद्धव्या ॥७५-७६॥१७५॥

इदानीं 'तणुमाणं' ति षट्सप्तत्यधिकशततमं द्वारमाह—

'पढमाए' इत्यादिगाथाद्वयम् ,

पढमाए पुढवीए नेरइयाणं तु होइ उच्चत्तं ।
सत्त धणु तिन्नि रयणी छच्चेव य अंगुला पुण्णा ॥७७॥
सत्तमपुढवीए पुणो पंचेव धणुस्सयाइं तणुमाणं ।
मज्झिमपुढवीसु पुणो अणेगहा मज्झिमं नेयं ॥७८॥
जा जम्मि होइ भवधारणिज्ज अवगाहणा य नरएसु ।
सा दुगुणा बोद्धव्वा उत्तरवेउव्वि उक्कोसा ॥७९॥

---

१ ०नीषु सर्वत्र- जे.सि. ॥

**भवधारणिज्जरूवा उत्तर [1]वेउव्विया य नरएसु ।**
**ओगाहणा जहन्ना अंगुलअस्संखभागो [2]य ॥८०॥** [ तु. बृहत्सं. २७१-८० ]

'पढमाए' इत्यादिगाथाद्वयम्, अवगाहते—अवतिष्ठते जीवोऽस्यामित्यवगाहना—तनुः शरीरमित्येकोऽर्थः; सा द्विधा—भवधारणीया उत्तरवैक्रिया च । भवे—नारकादावायुः समाप्तिं यावदनवरतं धार्यतेऽसाविति भवधारणीया; स्वाभाविकं शरीरमित्यर्थः । सहजशरीरग्रहणोत्तरम्—उत्तरकालं कार्यविशेषमाश्रित्य विविधा क्रियत इत्युत्तरवैक्रिया । एकैकाऽपि च द्विधा—जघन्या उत्कृष्टा च ।

तत्र प्रथमं तावत् **प्रतिपृथिवि**[3] **उत्कृष्टा भवधारणीयाऽवगाहना** प्रोच्यते—प्रथमायां रत्नप्रभायां पृथिव्यां नारकाणामुत्कर्षतो भवधारणीयावगाहनोच्चत्वं सप्त धनूंषि तिस्रो रत्नयः—त्रयो हस्ता इत्यर्थः, षडेव चाङ्गुलानि पूर्णानि, उत्सेधाङ्गुलेन [4]सपादैकत्रिंशद्धस्ता इति भावः । सप्तमपृथिव्यां पुनः पञ्चैव धनुःशतान्युत्कर्षतो नारकाणां तनुमानं—शरीरोच्छ्रयः । मध्यमपृथिवीषु—शर्कराप्रभाद्यासु तमःप्रभापर्यन्तासु पुनर्मध्यमं—प्रथम-सप्तमपृथिवीनारकतनुमानयोर्मध्यवर्ति अनेकधा । पूर्वपूर्व पृथिवीत उत्तरोत्तरपृथिवीषु द्विगुणद्विगुणं तनुमानमुत्कर्षतो ज्ञातव्यम् । तथाहि—रत्नप्रभानारकतनुमानाद् द्विगुणं शर्कराप्रभायां—पञ्चदश धनूंषि द्वौ हस्तौ द्वादश चाङ्गुलानि देहमानम्, एवं वालुकाप्रभायामेकत्रिंशद्धनूंषि एको हस्तः, पङ्कप्रभायां द्वाषष्टिर्धनूंषि द्वौ हस्तौ, धूमप्रभायां पञ्चविंशं धनुःशतम्, तमःप्रभायां सार्धे द्वे धनुःशते, तमस्तमःप्रभायां पञ्चैव धनुःशतानीति ॥७७-७८॥

सम्प्रति प्रतिपृथिव्युत्कर्षत [1]उत्तरवैक्रियामवगाहनामाह—'जा जम्मी' त्यादि, [2]सप्तसु नरकेषु—नरकपृथिवीषु मध्ये यस्मिन्नरके—नरक पृथिव्यामुत्कृष्टा भवधारणीया याऽवगाहना उक्ता सा द्विगुणा सती यावत्प्रमाणा भवति तावती तस्यां नरकपृथिव्यामुत्कृष्टा उत्तरवैक्रियरूपा अवगाहना बोद्धव्या। तद्यथा—रत्नप्रभायामुत्कृष्टा उत्तरवैक्रियावगाहना पञ्चदश धनूंषि द्वौ च सार्धौ हस्तौ, शर्कराप्रभायामेकत्रिंशद्धनूंषि एको हस्तः, वालुकाप्रभायां द्वाषष्टिर्धनूंषि द्वौ च हस्तौ, पङ्कप्रभायां पञ्चविंशं धनुःशतम्, धूमप्रभायां सार्धे द्वे शते, तमःप्रभायां पञ्च धनुःशतानि, तमस्तमःप्रभायां धनुःसहस्रमिति ॥७९॥

सम्प्रति भवधारणीयामुत्तरवैक्रियां च जघन्यामाह—'भवधारणिज्ज०' गाहा, नरकेषु—सर्वासु नरकपृथिवीषु नारकाणां जघन्या भवधारणीया अङ्गुलस्यासङ्ख्येयो भागः; सा चोत्पत्तिसमये द्रष्टव्या; न त्वन्यदा। उत्तरवैक्रियरूपा पुनरवगाहना जघन्याऽङ्गुलसङ्ख्येयभागमात्रा; साऽपि च प्रारम्भकाले द्रष्टव्या; केवलं सा प्रथमसमयेऽपि तथाविध[3]प्रयत्नाभावादङ्गुलसङ्ख्येयभागमात्रैव भवति न त्वसङ्ख्येयभागमात्रा, केचिच्च 'अंगुलअसंखभागो उ' इति पठन्तो जघन्यामुत्तरवैक्रियामप्यङ्गुलासङ्ख्यातभागप्रमाणामाहुः; तदसङ्गतमेव समयविरोधात्, तथा च प्रज्ञापनासूत्रम्—

"तत्थ णं जा सा उत्तरवेउव्विया सा जहन्नेणं अंगुलस्स संखेज्जइभागं उक्कोसेणं धणुसहस्स [पद २१-सूत्र २७२। प. ४१७]" मिति।

---

१ उत्कृष्टवै० वि.॥ २ तुलना—बृहत्सं. वृत्तिः ३ गा. २७१, प. ३१० तः॥ ३ प्रयत्न मा० इति बृ.सं. वृत्तौ॥

तथा अनुयोगद्वारटीकायां हरिभद्रसूरिरप्याह—

''उत्तरवैक्रिया तु तथाविध[1]प्रयत्नाभावादाद्यसमयेऽप्यङ्गुलसङ्ख्येयभागमात्रैव'' [प. ८०] त्ति ॥८०॥१७६॥

इदानीम् 'उप्पत्ति-नास-विरहो' त्ति सप्तसप्तत्यधिकशततमं द्वारमाह—

गाथा १०८१-२

चउवीसई[2] मुहुत्ता १ सत्त अहोरत्त २ तह य पन्नरस ३ ।
मासो य ४ दो य ५ चउरो ६ छम्मासा ७ विरहकालो उ ॥८१॥
उक्कोसो रयणाइसु सव्वासु जहन्नओ भवे समओ[3] ।
एमेव य उव्वट्टणसंखा पुण [4]सुरवरुतुल्ला ॥ ८२ ॥ [तुलना-बृहत्सं. २८१-२]

प्र. आ. ३१९

'चउवीसइ मुहुत्ता' इत्यादिगाथाद्वयम्, [5]इह नरकगतौ तिर्यङ्मनुष्यगतिका जीवास्तावदनवरतं सदैवोत्पद्यन्ते, कदाचित्त्वन्तरमपि भवति; तच्च सामान्येन सर्वामपि नरकगतिमाश्रित्य जघन्येनैकः समयः, उत्कृष्टतस्तु द्वादश मुहूर्ताः । एतावन्तं कालमन्यत आगत्यैकोऽपि जन्तुर्नरकगतौ नोत्पद्यते इति भावः । इदं च सूत्रेऽनुक्तमपि स्वयमेव द्रष्टव्यम् । यदुक्तम्—

१ प्रयत्न मात्रा० इति बृ. सं. वृत्तौ पाठः ॥ २ ८यं-सि. प्रकरणरत्नाकरे (भा. ३) भीमसिंह संस्करणे बृ. सङ्ग्रहण्यां च ॥ ३ समयो-मु. । तुला-बृ. सङ्ग्रहणी ॥ ४ सुरवरुतुल्ला (राण समा)-मु. । सुखरू० इति बृहत्संग्रहिण्यां पाठः ॥ सुरवरा- इति भगवती. वृत्तौ [प. १०७ A] पाठः ॥ ५ तुलना-बृहत्स. वृत्तिः प. १११ A तः । जीवसमासवृत्तिः प. २६० ॥

"निरइगई णं भन्ते ! केवइयं कालं विरहिया उववाएणं पन्नत्ता ?, गोयमा ! जहन्नेणं एक्कं समयं उक्कोसेणं बारस मुहुत्त" [समवायाङ्ग सू. १५४ ]त्ति ।

प्रतिपृथिवीषु (वि तू) त्पादान्तरमुत्कृष्टतो रत्नप्रभायां चतुर्विंशतिमुहूर्ताः, शर्कराप्रभायां सप्ताहोरात्राः, वालुकाप्रभायां पञ्चदश, पङ्कप्रभायामेको मासः, धूमप्रभायां द्वौ मासौ, तमःप्रभायां चत्वारो मासाः, तमस्तमःप्रभायां षण्मासा विरहकालः—अन्तरकाल उत्कृष्टतः । जघन्यतः पुनः सर्वास्वपि रत्नप्रभादिकासु पृथिवीषु प्रत्येकं भवत्येकः समयो विरहकालः ।

'एवमेव य उव्वट्टण' त्ति यथोपपातविरहकाल उक्तः, एवमेव उद्वर्तनविरहकालोऽपि जघन्यत उत्कर्षतश्च वाच्यः । किमुक्तं भवति ?—नरकेभ्यो नारकाः प्रायः सततं च्यवन्ते कदाचिदेव त्वन्तरम् ; तच्च सामान्येन नरकगतिमाश्रित्य जघन्यत एकः समयः, उत्कृष्टतस्तु द्वादश मुहूर्ताः । विशेषचिन्तायां तु जघन्यतः सर्वास्वपि पृथिवीषु उद्वर्तनाविरहकाल एकः समयः, उत्कर्षतो रत्नप्रभायां चतुर्विंशतिमुहूर्ताः, शर्कराप्रभायां सप्त दिनाः, वालुकाप्रभायां पक्षः, पङ्कप्रभायां मासः, धूमप्रभायां द्वौ मासौ, तमःप्रभायां चत्वारो मासाः, तमस्तमःप्रभायां षण्मासाः । एकस्मिन्नारके उद्वृत्ते पुनरियता कालेनान्यो नारक उद्वर्तत इति भावः ।

'संखा पुण सुरवरतुल्ल' त्ति उपपातोद्वर्तनयोः सङ्ख्या पुनरेकस्मिन् समये कियन्तो नारका उत्पद्यन्ते च्यवन्ते चेत्येवंलक्षणा सुरवरैस्तुल्या, यथा सुराणां वक्ष्यते तथैव द्रष्टव्या । तद्यथा—एकस्मिन् समये नारका उत्पद्यन्ते च्यवन्ते च जघन्यत एको द्वौ वा, उत्कर्षतस्तु सङ्ख्याता असङ्ख्याता [1]वेति ॥१०८१-८२॥१७७॥ ॥२९७॥

१ चेति- खं. ॥

सम्प्रति 'लेसाउ' त्ति अष्टसप्तत्यधिकशततमं द्वारमाह—

**काऊ १ काऊ २ तह [1]काउनील ३ नीला ४ य नीलकिण्हा ५ य ।**

**किण्हा ६ किण्हा ७ य तहा सत्तसु पुढवीसु लेसाओ ॥८३॥** [तु. बृहत्सं. गा. २८९]

'काऊ' गाहा, इह सामान्येन तावन्नारकाणां लेश्याषट्कमध्यादाद्याः कृष्ण-नील-कापोताख्यास्तिस्र एव लेश्या भवन्ति । ताश्च प्रतिपृथिवि[2] प्रतिपाद्यन्ते । तत्र [3]कापोत्यादयो लेश्याः सप्तस्वपि पृथिवीषु यथा-सङ्ख्येन भवन्ति । तथाहि— [4]रत्नप्रभायामेका कापोतलेश्यैव भवति । शर्कराप्रभायामपि कापोतलेश्यैव; केवलं क्लिष्टतरा वेदितव्या । एवं सर्वत्र सजातीया विजातीया[5] च लेश्याऽधोऽधः क्लिष्टतरा क्लिष्टतमा वाच्या । वालुकाप्रभायां [6]कापोती नीला च लेश्या भवति; केषुचिदुपरितनेषु प्रस्तटेषु कापोतलेश्या, केषुचिद-धस्तनेषु नीललेश्येति भावः । पङ्कप्रभायां केवला नीललेश्यैव । धूमप्रभायां नीललेश्या कृष्णलेश्या च; केषुचिदुपरितनप्रस्तटेषु नीललेश्या, शेषेष्वधस्तनप्रस्तटेषु कृष्णलेश्या भवतीत्यर्थः । तमःप्रभायामेकैव कृष्णलेश्या । तमस्तमःप्रभायामप्यतिसङ्क्लिष्टतमा [7]कृष्णलेश्यैवेति ।

[8]इह च केचिदाचक्षते—यथैता नारकाणां वक्ष्यमाणाश्च देवानां बाह्यवर्णरूपाः किल द्रव्यलेश्या अवगन्तव्याः; अन्यथा सप्तमपृथिवीनारकाणां या सम्यक्त्वप्राप्तिः श्रुतेऽभिधीयते सा न युज्यते; [9]तेज-स्यादिलेश्यात्रय एव तदवाप्तेरुक्तत्वात् । यदुक्तमावश्यके—

१ काऊ नील-मु. ॥ २ ०वी- सि वि. ॥ ३ कापोतादयो-मु. ॥ ४ तुलना-जीवसमासवृत्तिः प. ६५ तः ॥ ५ ०यादि लेश्या० खं. ॥ ६ कापोत० मु ॥ ७ कृष्णलेश्यैव भवति-खं. ॥ ८ तुलना-बृहत्सं. वृत्तिः प. ११२ A ॥ ९ तेज० सि. ॥

△"सम्मत्तस्स य तिसु उवरिमासु पडिवज्जमाणओ होइ। पुव्वपडिवन्नओ पुण अन्नयरीए उ लेसाए ॥ १॥"

उपरितन्यश्च तिस्रो लेश्यास्तेषां न सन्ति। सप्तमपृथिव्यां कृष्णलेश्याया एवोक्तत्वात्। तथा सौधर्मे तेजोलेश्यैव केवला वक्ष्यते; अस्याश्च प्रशस्तपरिणामहेतुत्वेन सङ्गमकादीनां भुवनगुरौ रौद्रोपसर्गकर्तृत्वानुपपत्तिः। तथा—★'काऊ नीला [1]कण्हा लेसाओ तिन्नि होंति नरएसु।' [ तुलना बृ.सं.गा.२८८ ]

इत्यादिरूपो नियमोऽपि विरुध्यते।

□ 'देवाण नारयाण य दव्वल्लेसा हवंति एयाओ।

[2]भावपरावत्तिइ पुण सुरनेरइयाण छल्लेसा ॥ १ ॥' [जीवसमास गा. ७४] इति वचनात्।

तस्मादेता नारकाणां वक्ष्यमाणाश्च सुराणां बाह्यवर्णरूपा एवेति।

तदेतदयुक्तमभिप्रायापरिज्ञानात्। [3]लेश्याशब्दो हि शुभाशुभे परिणामविशेषे व्याख्यातः, तस्य च परिणामविशेषस्योत्पादकानि कृष्णादिरूपाणि द्रव्याणि जन्तूनां सदा संनिहितानि सन्ति। एतैश्च कृष्णादिद्रव्यैर्जीवस्य ये परिणामविशेषा जन्यन्ते मुख्यतया त एव लेश्याशब्देनोच्यन्ते। गौणवृत्त्या पुनः कारणे कार्योपचारलक्षणया एतान्यपि कृष्णादिरूपाणि द्रव्याणि लेश्याशब्देन व्यपदिश्यन्ते। ततश्च नारकाणां

△ सम्यक्त्वस्य च तिसृषूपरितनीषु प्रतिपद्यमानको भवति। पूर्वप्रतिपन्नकोऽन्यतरस्यां पुनर्लेश्यायाम् ॥१॥

★ कापोती नीला कृष्णा लेश्यास्तिस्रो भवन्ति नरकेषु ॥

१ किण्हा-ख.॥ २ भावपरावत्तीए-सि. वि.। भावपरित्तीए-इति जीवसमासे पाठः॥ ३ तुलना-जीवसमासवृत्तिः प. ६६॥

□ देवानां नारकाणां च द्रव्यलेश्या भवन्त्येताः। भावपरावृत्तौ पुनः सुरनैरयिकाणां षट्लेश्या ॥१॥

देवानां च या लेश्यास्ता द्रव्यलेश्या द्रष्टव्याः। तत्तल्लेश्याद्रव्याणि तस्य तस्य नारकस्य देवस्य वा [1]सर्वदैवावतिष्ठन्तोदयानि [2]द्रष्टव्यानीति तात्पर्यम्। न पुनर्बाह्यवर्णरूपाः; तानि च लेश्याद्रव्याणि तिर्यङ्मनुष्याणामन्यलेश्याद्रव्योपधाने विशुद्धवस्त्रमिव मञ्जिष्ठादिरागयोगे सर्वथा स्वरूपत्यागात्तद्रूपेणैव परिणमन्ते; अन्यथैतल्लेश्यायाः पल्योपमत्रयस्थितेरपि सम्भवादुत्कर्षतोऽप्यन्तर्मुहूर्तमागमोक्तं विरुध्येत। नारकदेवलेश्याद्रव्याणां तु तदन्यलेश्याद्रव्यसम्पर्के तदाकारमात्रं [3]तत्प्रतिबिम्बमात्रं वा जायते; न पुनः स्वस्वरूपपरिहारेण तद्रूपता। तथाहि—यथा वैडूर्यादिमणेः[4] प्रोतकृष्णादिसूत्रसम्पर्कादस्पष्टं किञ्चित्तदाकारभावमात्रं भवति, स्फटिकोपलस्य वा जपाकुसुमादिसन्निधानतः स्पष्टं तत्प्रतिबिम्बमात्रम्; न तूभयत्रापि तद्रुपतापत्तिः। तथा कृष्णादिलेश्याद्रव्याण्यपि नीलादिलेश्याद्रव्यौघं प्राप्य कदाचिदस्पष्टं तदाकारभावमात्रं कदाचित्स्पष्टं तत्प्रतिबिम्बमात्रं प्रतिपद्यन्ते, न पुनस्तद्वर्ण-गन्ध-रस-स्पर्शतया परिणम्य नीलादिलेश्याद्रव्यरूपाण्येव भवन्ति। न चैतन्निजमनीषाविजृम्भितम्। **प्रज्ञापनायां** लेश्यापदे इत्थमेव प्रतिपादितत्वात्। तत्सूत्रं च विस्तरभयान्न लिखितमिति।

एवं च सप्तमपृथिव्यामपि यदा कृष्णलेश्या तेजोलेश्यादि[5]द्रव्याणि प्राप्य तदाकारमात्रेण तत्प्रतिबिम्बमात्रेण वाऽन्विता भवति[6]तदा सदावस्थितकृष्णलेश्याद्रव्ययोगेऽपि साक्षात्तेजोलेश्यादिद्रव्यसान्निध्ये इव शुभःपरिणामो नारकस्य जायते [7]जपोपरक्तस्फटिकसन्निधाने स्फटिकस्य रक्ततावत्; तत्परिणामे चास्य सम्यक्त्वावाप्तिरविरु-

१ सर्वदैवावस्थितोदयानि – मु.॥ २ द्रव्याणीति-सि. वि.॥ ३ तत्प्रतिबिम्बमात्रं-खं.। ४ ०णि–सि.। ०णिः-जे.॥ ५ ०द्रव्याण्यपि नीलादिलेश्याद्रव्याणि तदाकारमात्रेण वान्विता-सि. वि॥ ६ ०न्ति–मु.॥ ७ जपोपरक्तस्फटिकसन्निधाने स्फटिकस्य–मु.॥

द्धेति । न चैवमपि तेजोलेश्यादिसद्भावे सप्तमपृथिव्यां केवलकृष्णलेश्याभिधायिनः सूत्रस्य व्याघातः; यतस्तस्यां कृष्णैव सदावस्थायिनी तैजस्यादिका त्वाकारमात्रादिना कदाचिदेव जायते; न च जातापि चिरमवतिष्ठते ; न चावस्थितायामपि तस्यां [1]कृष्णलेश्याद्रव्याणि सर्वथा स्वस्वरूपं त्यजन्ति । ततोऽधिकृतसूत्रे कृष्णैव सप्तम्यामुक्तेत्येवं सर्वत्र भावनीयम् । अत एव सङ्गमकादीनामप्याकारमात्रादिना कृष्णलेश्यासम्भवादुपपद्यते त्रिभुवनगुरावुपसर्गविधातृत्वम् । या अपि भावपरावृत्त्या सुरनारकाणां षडपि लेश्या उक्तास्ता अपि प्रागुक्तेनैवाकारभावमात्रादिना प्रकारेण घटन्ते नान्यथा । लेश्यात्रयनियमस्तु सदावस्थितोदयलेश्याद्रव्यापेक्षत्वादविरुद्ध इति । किंच–आसां बाह्यवर्णरूपत्वे [2]प्रज्ञप्त्यादिषु—

'नेरइया णं भंते ! सव्वे समवन्ना ?, गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ ? गोयमा ! नेरइया दुविहा पन्नत्ता, तंजहा–पुव्वोववन्नगा य पच्छोववन्नगा य, तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धवन्नतरागा, जे ते पच्छोववन्नगा ते णं अविसुद्धवन्नतरागा, से एणट्ठेणं गोयमा ! एवं वुच्चइ नो नेरइया सव्वे [3]समवन्ना" [भगवती सू. १।२। सू. २१] । इति वर्णमुक्त्वा–

'नेरइया णं भंते ! सव्वे समलेसा ?, गोयमा ! नो इणट्ठे समट्ठे, से केणट्ठेणं भंते ! एवं वुच्चइ ?, गोयमा ! नेरइया दुविहा पन्नत्ता, तंजहा–पुव्वोववन्नगा पच्छोववन्नगा य, तत्थ णं जे ते पुव्वोववन्नगा ते णं विसुद्धलेसतरागा, जे ते पच्छोववन्नगा ते णं अविसुद्धलेसतरागा, से एएणट्ठेणं गोयमा ! एवं वुच्चइ–नो

१ कृष्णलेश्यादिद्रव्याणि–मु. ॥ २ लेश्यास्वरूपविषये विशेषार्थं द्रष्टव्य योगशास्त्रे [जैनसाहित्यविकाशमण्डलप्रकाशिते] टिप्पनं प. ८१९ तः ॥ ३ समा० खं. ॥

नेरइया सव्वे समलेस्सा" [भगवती सू.१/२/सू. २१] । इति लेश्योक्तिरतिरिच्येत, वर्णानामेव लेश्यात्वाभ्युपगमात् । तेषां च पूर्वसूत्रेणैव प्रतिपादितत्वादिति ॥८३॥१७८॥

सम्प्रति 'अवहि' त्ति एकोनाशीत्यधिकशततमं द्वारमाह—

**चत्तारि गाउयाइं १ अद्धुट्ठाइं २ [1]तिगाउयं चेव ३ ।**
**अड्ढाइज्जा ४ दोन्नि [2]य ५ दिवड्ढ ६ मेगं च ७ नरयोहो ॥८४॥** [तु. आव. नि. गा. ४७]

'चत्तारि' गाहा, इह रत्नप्रभायां नरकावासेषु नारकाणां चत्वारि गव्यूतान्यवधिः–उत्कृष्टमवधिक्षेत्रप्रमाणं भवति । शर्कराप्रभायां तु अर्धं चतुर्थस्य येषु तान्यर्धचतुर्थानि गव्यूतानि सार्धं गव्यूतत्रयमित्यर्थः । वालुकाप्रभायां गव्यूतत्रयम् । पङ्कप्रभायामर्धं तृतीयस्य येषु तान्यर्धतृतीयानि गव्यूतानि; धूमप्रभायां द्वे गव्यूते; तमायां द्वितीयस्यार्धं यत्र तद् द्व्यर्धं [3]गव्यूतम्, सप्तमपृथिव्यां पुनरेकं गव्यूतमुत्कृष्टमवधिप्रमाणम् ।

तथा सप्तस्वपि पृथिवीषु प्रत्येकमुत्कृष्टादवधिक्षेत्रप्रमाणादर्धगव्यूते व्यपनीते जघन्यमवधिक्षेत्रप्रमाणं भवति । तथाहि–प्रथमायां पृथिव्यां सार्धानि त्रीणि गव्यूतानि, द्वितीयायां त्रीणि गव्यूतानि, तृतीयायामर्धतृतीयानि गव्यूतानि, चतुर्थ्यां द्वे गव्यूते, पञ्चम्यां सार्धं गव्यूतम्, षष्ठ्यामेकं गव्यूतम्, सप्तम्यामर्धगव्यूतमिति । उक्तं च–

● " [4]अद्धुट्ठगाउयाई जहन्नयं [5]अद्धगाउयंताइं" [विशेषावश्यक-भाष्ये गा. ६९४] ति ॥८४॥१७९॥

---

१ तिगाउयाइ–ता. ॥ २ उ- ता. ॥ ३ गव्यूतं– सि. जि. नास्ति ॥ ४ अब्दुट्ठईयायाई-खं. । अद्धुट्ठईयाइं–इति विशेषावश्यके ॥ ५ अद्धगाउयंता" इति-मु. ॥ ● अध्युष्ठगव्यूतादिको जघन्योऽर्धगव्यूतान्त. ॥

सम्प्रति **'परमाहम्मिय'** त्ति अशीत्यधिकशततमं द्वारमाह—

**अंबे १ अंबरिसी २ चेव, सामे य ३ सबलेइ य ४ ।**
**रुद्दो ५ वरुद्द ६ काले य ७, महाकालित्ति ८ आवरे ॥ ८५ ॥** [तुला-भगवती सूत्रे ३।७।४]
**असिपत्ते ९ धणू १० कुंभे ११, वालू १२ वेयरणी इय १३ ।**
**खरस्सरे १४ महाघोसे १५, पन्नरस परमाहम्मिया ॥ ८६ ॥** [तुला-समवायाङ्गे सू. १५]

'अंबे' इत्यादि श्लोकद्वयम्, परमाश्च ते अधार्मिकाश्च सङ्क्लिष्टपरिणामत्वात् परमाधार्मिका–असुरविशेषाः । ते च व्यापारभेदेन पञ्चदश भवन्ति । तत्र यः परमाधार्मिको देवो नारकानम्बरतले नीत्वा निःशङ्कं विमुञ्चति सोऽम्ब इत्यभिधीयते १ ।

[1]यस्तु नारकान्निहतान् कल्पनिकाभिः खण्डशः कृत्वा भ्राष्ट्रपाकयोग्यान् करोतीत्यसावम्बरीषस्य–भ्राष्ट्रस्य सम्बन्धादम्बरीष इति २ ।

यस्तु रज्जुपाणिप्रहारादिना शातन-पातनादिकं करोति वर्णतश्च श्यामः स श्याम इति ३ ।

यश्चान्त्र-वसाहृदय-कालेज्यकादीन्युत्पाटयति वर्णतश्च शबलः–कर्बुरः, [1]शबल इति ४ ।

यः शक्तिकुन्तादिषु नारकान् प्रोतयति स रौद्रत्वाद्रौद्रः ५ ।

यस्तु तेषामङ्गोपाङ्गानि भनक्ति सोऽत्यन्तरौद्रत्वादुपरौद्रः ६ ।

यः पुनः कण्ड्वादिषु पचति वर्णतश्च कालः स कालः ७ ।

१ तुला-समवायाङ्गवृत्तिः प. २९ B । भगवतीसूत्रवृत्तिः ३ । ७ । ४ ॥

महाकाल इति चापरः परमाधार्मिक इति प्रक्रमः; स च श्लक्ष्णमांसानि खण्डयित्वा खादयति वर्णतश्च महाकाल इति ८।

असिः—खड्गस्तदाकारपत्रवद्वनं विकुर्व्य यस्तत्समाश्रितान्नारकानसिपत्रपातनेन तिलशश्छिनत्ति सोऽसिपत्रः ९।

यो धनुर्विमुक्तार्धचन्द्रादिभिर्बाणैः कर्णादीनां छेदन-भेदनानि करोति स धनुः १०।

भगवत्यां तु महाकालान्तर[1]मसिस्ततोऽसिपत्रस्ततः कुम्भ इति पठ्यते। तत्र योऽसिना नारकांश्छिनत्ति सोऽसिः; शेषं तथैव।

यः कुम्भ्यादिषु तान् पचति स कुम्भः ११।

यः कदम्बपुष्पाकारासु वज्राकारासु वा [2]वैक्रियवालुकासु तप्तासु चनकानिव तान् पचति स वालुकः १२।

विरूपं तरणं प्रयोजनमस्या इति वैतरणीति यथार्था पूय-रुधिर-त्रपु ताम्रादिभिरतितापात्कलकलायमानैर्भृतां नदीं विकुर्वित्वा तत्तारणेन नारकान् यः कदर्थयति स वैतरणीति १३।

[3]यो वज्रकण्टका[4]कुलं शाल्मलीवृक्षं नारकमारोप्य खरं स्वरं कुर्वन्तं कुर्वन् वा कर्षति स खरस्वरः १४।

---

१ ०मसिभूतोस्ततो० खं वि.। मस्तिभूतो० सि.॥ २ वैक्रियासु-मु.। वैक्रिया-सि.॥ ३ ये- ख. वि.॥
४ कुलशाल्मलीवृक्षे- मु.। खं. वि. प्रत्योः समवायाङ्गवृत्तावपि कुलं शाल्मलीवृक्षम् इति पाठः [प. ३० A]॥

यस्तु भीतान् प्रपलायमानान्नारकान् पशूनिव वाटकेषु महाघोषं [1]कुर्वन् निरुणद्धि स महाघोष इति १५।

एवमेते पञ्चदश परमाधार्मिकाः प्राग्जन्मनि सङ्क्लिष्टक्रूरक्रियाः पापाभिरताः पञ्चाग्न्यादिरूपं मिथ्याकष्टतपः कृत्वा रौद्रीमासुरीं गतिमनुप्राप्ताः सन्तस्ताच्छील्यान्नारकाणामाद्यासु तिसृषु पृथिवीषु विविधवेदनाः समुदीरयन्ति, तथा कदर्थ्यमानांश्च नारकान् दृष्ट्वा इहत्यमेष-महिष-[2]कुक्कुटादियुद्धप्रेक्षकनरा इव हृष्यन्ति । [3]हृष्टाश्चाट्टहासं चेलोत्क्षेपं त्रिपद्यास्फालनादि च कुर्वन्ति । किं बहुना?, यथैषामित्थं प्रीतिर्न तथा नितान्तकान्ते प्रेक्षणकादाविति ॥१०८५-८६॥१८०॥

सम्प्रति '[4]नरयुव्वट्टाण लद्धिसंभवो' त्येकाशीत्यधिकशततमं द्वारमाह—

तिसु तित्थ चउत्थीए उ[5] केवलं पंचमीए[6] सामन्न ।
छट्ठीए विरइऽविरई सत्तमपुढवीए[7] सम्मत्तं ॥ ८७ ॥
पढमाउ[8] चक्कवट्टी बीयाओ[9] राम-केसवा हुंति ।
तच्चाओ अरहंता तहऽन्तकिरिया चउत्थीओ[10] ॥ ८८ ॥
उव्वट्टिया उ संता नेरइया तमतमाओ[11] पुढवीओ[12] ।
न लहंति माणुसत्तं तिरिक्खजोणिं उवणमंति ॥ ८९ ॥

१ कुर्वतो-मु. । ख. वि. प्रत्योः समवायाङ्गवृत्त्योरपि 'कुर्वन्' इति पाठः । बृ ॥ २ ०कुकुट० मु. सि. ॥ ३ हृष्टाश्चाट्टाट्टहासं-मु. सि. ॥ ४ नरयुवट्टण-ख. । नरए उव्वट्टाण-सि. वि. ॥ ५ उ-मु नास्ति ॥ ६ ०इ-मु. । उ-खं. ॥ ७ ०इ-मु. ॥ तुला-बृहत्सङ्ग्रहणी ॥ ८ ०ओ-मु. । तुला-बृहत्सङ्ग्रहणी ॥ ९ ए-ता. । ०उ-सि. ॥ १० ०ए- वि. ॥ ११ ०उ-वि. ॥ १२ ०उ सि. ॥

छट्ठीओ पुढवीओ उव्वट्टा इह अणंतरभवंमि ।
भज्जा [1]मणुस्सजम्मे संजमलंभेण उ विहीणा ॥ ९० ॥ [ तुला-बृहत्सं. २९१-४ ]

'तिसु तित्थ' गाहा, [2]इह 'तिसु' त्ति सप्तम्याः प्राकृतत्वेन पञ्चम्यर्थत्वादाद्याभ्य तिसृभ्य एव पृथिवीभ्य उद्वृत्ता अनन्तरभवे तीर्थकृतो भवन्ति, न शेषपृथिवीभ्यः, सम्भवमात्रं चेदं, न नियमः । तेन ये [3]पूर्वबद्धनरकायुषः सन्तः स्वहेतूपात्ततीर्थकृन्नामगोत्राः श्रेणिकादय इव नरकेषु गच्छन्ति त एव तत उद्वृत्ता अनन्तरभवे तीर्थकृतो, न शेषाः । चतुर्थ्याः पृथव्या उद्वृत्ताः केचित् केवलं-केवलज्ञानं सामान्येन प्राप्नुवन्ति, तीर्थकृतस्तु नियमेन न भवन्ति । पञ्चम्या उद्वृत्ताः श्रामण्यं- [4]श्रमणभावं लभन्ते, न तु केवलज्ञानम् । षष्ठ्या उद्वृत्ता विरत्यविरतिं-देशविरतिं लभन्ते, न तु श्रामण्यम् । सप्तम्या उद्वृत्ता-सम्यक्त्वं-सम्यग्दर्शनरूपम् , न देशविरत्यादिकमिति । अयमत्र [5]भावार्थः-आद्याभ्यस्तिसृभ्य उद्वृत्तास्तीर्थकृतो भवन्ति, चतसृभ्य उद्वृत्ताः केवलज्ञानिनः, पञ्चम्या उद्वृत्ताः संयमिनः, षष्ठ्या उद्वृत्ताः देशविरताः सप्तम्या उद्वृत्ता सम्यग्दृष्टय इति ॥८७॥

पुनरपि लब्धिविशेषसम्भवं दर्शयन्नाह-'पढमाउ' गाहा, प्रथमायाः-रत्नप्रभाया एवोद्वृत्ताश्चक्रवर्तिनो भवन्ति, न शेषपृथिवीभ्यः । द्वितीयायाः-द्वितीयां मर्यादीकृत्य नरकेभ्य उद्वृत्ता राम केशवा-बलदेव-वासुदेवा भवन्ति । एवं सर्वत्र मर्यादा भावनीया । तृतीयाया उद्वृत्ता अर्हन्तो भवन्ति । चतुर्थ्या उद्वृत्ता

१ माणसजम्मे-इति बृहत्सङ्ग्रहण्या पाठः ॥ २ तुलना-बृहत्सं. वृत्तिः प. ११६ A तः ॥ ३ पूर्वनिबद्ध-मु. ॥ ४ सर्वविरतिरूपं-मु. ॥५ परमार्थः-ख. ॥

'अंतकिरिय' त्ति पदैकदेशे पदसमुदायोपचाराद् अन्तक्रियासाधकाः, मुक्तिगामिनो भवन्तीत्यर्थः। तथा तमस्तमाभिधानायाः सप्तम्याः पृथिव्या उद्वृत्ताः सन्तो नारका नियमान्मानुषत्वं न लभन्ते। किन्तु तिर्यग्योनि [1]मुपनमन्ति–धातूनामनेकार्थत्वेन प्राप्नुवन्ति। तथा षष्ठ्याः–तमःप्रभाभिधानायाः पृथिव्या उद्वृत्ताः सन्तो नारका इहानन्तरभवे मनुष्यजन्मनि भाज्याः–केचिन्मनुष्या भवन्ति केचित्तु नेति भावः। येऽपि च मनुष्या भवन्ति तेऽपि नियमतः संयमलाभेन [2]सर्वविरतिरूपेण विहीना भवन्ति; न तु कदाचनापि तद्युक्ताः ॥१०८८-८९-९०॥१८१॥

इदानीं 'तेसु जेसिमुववाओ' इति द्व्यशीत्यधिकशततमं द्वारमाह—

अस्सन्नी खलु पढमं दोच्चं च [3]सरिसिवा तइय पक्खी।
सीहा जंति चउत्थिं उरगा पुण पंचमिं [4]पुढविं ॥ ९१ ॥
छट्ठिं च इत्थियाओ[5] मच्छा मणुया य सत्तमिं पुढविं।
एसो परमुववाओ बोद्धव्वो नरयपुढवीसु ॥ ९२ ॥
वालेसु य [6]दाढीसु य पक्खीसु य जलयरेसु उववन्ना।
संखिज्जाउठिईया पुणोऽवि नरयाउया हुंति ॥ ९३ ॥ [ तुला-बृहत्सं. २८४-६ ]

'असन्नी'त्यादिगाथाद्वयम्, असंज्ञिनः– [7]सम्मूर्च्छिमपञ्चेन्द्रियाः खलु प्रथमां नरकपृथिवीं

१ मुपनयन्ति–ख. ॥ २ सर्वविरतिलाभेन–मु. ॥ ३ सरिसवा–सि. वि. ॥ ४ पुहविं–सि. वि. ॥ ५ ०उ-सि. ॥ ६ दाढेसु–ता. ॥ ७ सम्मूर्च्छिमाः पञ्चे० मु. ॥ तुलना–बृहत्सं. वृत्तिः प. ११२ तः ॥

गच्छन्ति। खलुशब्दोऽवधारणे; तच्चावधारणमेवम्—असंज्ञिनः प्रथमामेव पृथिवीं यावद्गच्छन्ति; न परत इति; न तु त एव प्रथमां गच्छन्ति। गर्भजसरीसृपादीनामपि उत्तरपृथिवीषट्कगामिनां तत्र गमनभावात्। एवमुत्तरत्राप्य[1]वधारणीयम्। असंज्ञिनश्चात्र तिर्यञ्चो ज्ञेयाः; संमूर्च्छिममनुष्याणामपर्याप्तानामेव काल-करणतो नरकगतेरभावात्। तत्रापि पल्योपमासङ्ख्येयभागायुष्केष्वेव, उक्तं च—

○ "असन्नी णं नेरइयाउ[2] पकरेमाणा जहन्नेणं दस वाससहस्साइं, उक्कोसेणं पलिओवमस्स असंखेज्जइभागं पकरिंति" [ ] त्ति।

तथा द्वितीयामेव पृथिवीं यावद्गच्छन्ति सरीसृपा—भुजपरिसर्पा गोधा-नकुलादयो गर्भव्युत्क्रान्ता, न ततः परतः। एवं तृतीयामेवगर्भजाः पक्षिणो—गृध्रादयः; चतुर्थीमेव सिंहाः—सिंहोपलक्षिताश्चतुष्पदा गर्भजाः, पञ्चमीमेव गर्भजा उरगाः[3] उरःपरिसर्पाः सर्पादयः, षष्ठीमेव स्त्रियः—स्त्रीरत्नाद्या महारम्भादियुक्ताः, सप्तमीं यावद्गर्भजा मत्स्या—जलचरा मनुजाश्च [4]अतिक्रूराध्यवसायिनो महापापकारिणः। एष जीवविशेष-भेदेन परमः—उत्कृष्ट उपपातो बोद्धव्यो नरकपृथिवीषु, जघन्यतस्तु सर्वेषामपि रत्नप्रभायाः प्रथमे प्रस्तटे, मध्यमतः पुनर्जघन्यात्परतः स्वस्वोत्कृष्टोपपातादर्वागिति ॥ ९१-९२ ॥

सम्प्रति **केषाञ्चित्तिर्यग्योनिजानां बाहुल्यकृतं विशेषमाह—'वालेसु'** इत्यादि, नरकेभ्य उद्वृत्ता व्यालेषु-सर्पादिषु, दंष्ट्रिषु—व्याघ्र-सिंहादिषु, पक्षिषु—गृध्रादिषु, जलचरेषु—मत्स्यजातिषु सङ्ख्यातायुः

○ असञ्ज्ञिनो नैरयिकायुः प्रकुर्वन्तो जघन्येन दश वर्षसहस्राणि उत्कृष्टतः पल्योपमस्यासख्येयभागं प्रकुर्वन्ति ॥

१ ०वधारणं भावनीयं-मु. ॥ २ उयं-खं ॥ ३ ०जाः-खं. । अति० सि. त्रि. नास्ति ॥

स्थितय उत्पन्नाः सन्तो भूयः क्रूराध्यवसायवशगाः पञ्चेन्द्रियवधादीन् विधाय नरकायुषो भवन्ति। एतच्च बाहुल्येनोच्यते,[1] न तु नियमः; यतो नारकेभ्योऽपि केचिदुद्वृत्त्य सम्यक्त्वादिप्राप्तिवशाच्छुभां गतिमासादयन्तीति ॥९३॥ १८२॥

सम्प्रति 'संखा उप्पज्जताण' त्ति त्र्यशीत्यधिकशततमद्वारस्य 'तह य उवट्टमाणाणं' ति चतुरशीत्यधिकशततमद्वारस्य चावसरो विवरणाय, परमुत्पत्तिनाशविरहकालद्वारे 'संखा पुणसुरवरतुल्ल' [ गा. १०८२ ] त्ति गाथादलेन तदुद्वारद्वयमपि व्यक्तं प्राग्व्याख्यातमिति नेदानीं तद्विवृतमिति ॥१८३–१८४॥

१८५ द्वारे एकेन्द्रियादीनां कायस्थिति गाथा १०९४-५ प्र. आ. ३२४

सम्प्रति 'एगिंदियविगलिंदियसन्नीजीवाण कायठिइओ' त्ति पञ्चाशीत्यधिकशततमं द्वारमाह–

**अस्संखोसप्पिणिसप्पिणीउ एगिंदियाण [2]य चउण्हं ।**
**ता चेव ऊ अणंता वणस्सइए उ बोद्धव्वा ॥ ९४ ॥** [ उपदेशपद गा. १७ ]
**वाससहस्सा संखा [3]विगलाणं ठिईउ होइ बोद्धव्वा ।**
**सत्तट्ठभवा उ भवे पणिंदितिरिमणुय उक्कोसा ॥ ९५ ॥** [तुलना-बृहत्सं गा. ३३३-४]

'असंखोसप्पिणि' त्यादि गाथाद्वयम् , एकेन्द्रियाणां चतुर्णां–पृथिव्यप्तेजोवायुरूपाणां प्रत्येकमुत्कृष्टा कायस्थितिः–मृत्वा मृत्वा तत्रैव कायेऽवस्थानमसङ्ख्येया उत्सर्पिण्यवसर्पिण्यः । एतच्च कायस्थितिमानं कालतः; क्षेत्रतस्त्वसङ्ख्येया लोकाः । इदमुक्तं भवति–असङ्ख्येयेषु लोकाकाशेषु प्रतिसमयमेकैकप्रदेशापहारे सर्वप्रदेशापहारेण यावत्योऽसङ्ख्येया उत्सर्पिण्यवसर्पिण्यो भवन्ति तावत्य इति; ता एव–

१ ०न्ते-खं. ॥ २ (उ)–मु. ॥ ३ विगलाणं ठिइउ–मु. । वि. प्रतौ बृहत्सङ्ग्रहिण्यामपि विगलाण ठिईउ- इति पाठः ॥

उत्सर्पिण्यवसर्पिण्योऽनन्ता वनस्पतिकायिकस्योत्कृष्टा कायस्थितिः बोद्धव्या, इयमपि कालतः, क्षेत्रतस्तु पूर्वोक्तप्रकारेण अनन्ता लोकाः, असङ्ख्येयाः पुद्गलपरावर्त्ताः; ते च आवलिकाया असङ्ख्येयतमे भागे यावन्तः समयाः तत्तुल्या, इयं च कायस्थितिः सांव्यवहारिकानाश्रित्यद्रष्टव्या; [1]असांव्यवहारिकजीवानां त्वनादिरवसेया; ततो न मरुदेव्यादिभिर्व्यभिचारः, तथा च क्षमाश्रमणाः[2] —

★'तह काय-ठिइ-कालादओ विसेसे पडुच्च किर जीवे ।
नाणाइवणस्सइणो जे संववहारबाहिरिया ॥१॥'' [विशेषणवती गा. ५६]

यापि [3]चासांव्यवहारिकजीवानामनादिः कायस्थितिः साऽपि केषाञ्चिदनादिरपर्यवसाना ये जातुचिदप्यसांव्यवहारिकराशेरुद्धृत्य सांव्यवहारिकराशौ न निपतिष्यन्ति, केषाञ्चिनादिः सपर्यवसाना, येऽसांव्यवहारिकराशेरुद्धृत्य सांव्यवहारिकराशौ निपतन्ति । अथ किमसांव्यवहारिकराशेर्विनिर्गत्य सांव्यवहारिकराशावागच्छन्ति ?, उच्यते, आगच्छन्ति, तथा चोक्तं विशेषणवत्याम्—

प्र. आ.
३२४

● ''सिज्झंति जत्तिया किर इह संववहारजीवरासीओ ।
इन्ति अणाइवणस्सइरासीओ तत्तिया तंमि ॥ १ ॥'' [गा. ६० ]

तत्र येऽनादिसूक्ष्मनिगोदेभ्य उद्धृत्य शेषजीवेषूत्पद्यन्ते ते पृथिव्यादिविविधव्यवहारयोगात् सांव्यवहारिकाः, ये पुनरनादिकालादारभ्य सूक्ष्मनिगोदेष्वेवावतिष्ठन्ते ते तु तथाविधव्यवहारातीतत्वादसांव्यवहा-

१ असं० खं. ॥ २ ०णाः-ख. सि. ॥ ३ चासं० खं. सि. ॥

★ तथा काय-स्थिति-कालादयो विशेषान् जीवान् किल प्रतीत्य । नानादिवनस्पतीन् ये संव्यवहारबाह्याः ॥१॥
● सिध्यन्ति यावन्तः किलेह संव्यवहारजीवराशेः । आयान्ति अनादिवनस्पतिराशेस्तावन्तस्तस्मिन् ॥१॥

रिकाः । तत्र सांव्यवहारिकाः सूक्ष्मनिगोदेभ्य उद्धृत्य शेषजीवेषूत्पद्यन्ते, तेभ्योऽप्युद्धृत्य केचिद् भूयोऽपि तेष्वेव निगोदेषु गच्छन्ति, परं तत्रापि सांव्यवहारिका एव ते, व्यवहारे पतितत्वात् , तत्र च सूत्रोक्तमुत्कर्षतोऽवस्थानकालमानम् , असांव्यवहारिकास्तु सदा निगोदेष्वेवोत्पत्तिमरणभाजो, न कदाचनापि त्रसादिभावं लब्धवन्त इति ॥९४॥

तथा विकलानां—द्वित्रिचतुरिन्द्रियाणां प्रत्येकं [1]कायस्थितिस्तु सङ्ख्याता वर्षसहस्राः, 'विगलाण य वाससहस्सं संखेज्ज' त्ति [द्वार-२ गा. ४९] पञ्चसङ्ग्रहवचनात् , पञ्चेन्द्रियतिरश्चां मनुष्याणां च संज्ञिपर्याप्तानामुत्कृष्टा कायस्थितिः सप्ताष्टौ वा भवा भवेत् । तत्र सप्त भवाः सङ्ख्येयवर्षायुषः, अष्टमस्त्वसङ्ख्येय[2]वर्षायुरेव । तथाहि—पर्याप्तमनुष्याः पर्याप्तसंज्ञिपञ्चेन्द्रियतिर्यञ्चो वा निरन्तरं यथासङ्ख्येयं सप्त नरभवांस्तिर्यग्भवान् वाऽनुभूय यद्यष्टमे भवे भूयस्तेष्वेवोत्पद्यन्ते [3]ततो नियमादसङ्ख्यायुष्केष्वेव नेतरेषु; [4]असङ्ख्यायुषश्च मृत्वा सुरेष्वेवोत्पद्यन्ते, ततो नवमोऽपि नरभवस्तिर्यग्भवो वा निरन्तरं न लभ्यते । अष्टसु च भवेषूत्कर्षतः कालमानं त्रीणि पल्योपमानि पूर्वकोटिपृथक्त्वाधिकानि ; जघन्या तु सर्वत्रापि कायस्थितिरन्तमुहूर्तमिति ॥९५॥१८५॥

सम्प्रति 'एगिंदियविगलसन्निजीवाणं भवट्ठिइ' त्ति षडशीत्यधिकशततमं द्वारमाह—

बावीसइ[5] सहस्सा सत्तेव सहस्स तिन्निऽहोरत्ता ।
वाए तिन्नि सहस्सा दसवाससहस्सिया रुक्खा ॥९६॥

१ कायस्थितेभ्यः-खं. । कायस्थितिः-वि. ॥ २ ०वर्षायुष एव-मु. ॥ ३ तदा-मु. ॥ ४ असङ्ख्यायुश्च मु. ॥ ५ ०ई-मु. ॥

संवच्छराइं बारस राइंदिय हुंति [1]अणुणपन्नासं ।
छम्मास तिन्नि पलिया पुढवाईणं [2]ठिउक्कोसा ॥९७॥
सण्हा य १ सुद्ध २ वालुय ३ मणोसिला ४ सक्करा य ५ खरपुढवी ६ ।
एक्कं १ बारस २ चउदस ३ सोलस ४ अट्ठार ५ बावीसा ॥९८॥

[ तुलना-बृहत्सं. गा. ३१२-४ ]

'बावीसाई' इत्यादिगाथाद्वयम्, [3]पृथिव्यादीनां मनुष्यपर्यन्तानां स्थितिः—आयुःप्रमाणरूपा एषा उत्कृष्टा, यथा—पृथिवीकायिकानां द्वाविंशतिर्वर्षसहस्राणि, अप्कायिकानां सप्त वर्षसहस्राणि, तेजस्कायिकानां त्रीणि रात्रिन्दिवानि, वाते—वातकाये त्रीणि वर्षसहस्राणि, वृक्षा—वनस्पतयो दशवर्षसाहस्रिकाः; किमुक्तं भवति ?—वनस्पतिकायिकानामुत्कर्षतः स्थितिर्दश वर्षसहस्राणीति । तथा द्वीन्द्रियाणामुत्कर्षत आयुःस्थितिर्द्वादश वर्षाणि, त्रीन्द्रियाणामेकोनपञ्चाशद्रात्रिन्दिवानि, चतुरिन्द्रियाणां षण्मासाः, पञ्चेन्द्रियाणां तिर्यग्मनुष्याणां त्रीणि पल्योपमानि; एषा चोत्कृष्टा स्थितिः, प्रायो निरुपद्रवस्थाने द्रष्टव्या, एवमग्रेऽपि ज्ञेयम् ॥ ९६॥ ९७॥

एवं सामान्येन पृथिव्यादीनामुत्कृष्टां स्थितिमभिधाय पृथिवीभेदेषु विशेषेणाह—'सण्हा य' गाहा, इह पूर्वार्धपदानामुत्तरार्धपदानां च यथाक्रमं योजना, सा चैवं—श्लक्ष्णा—मरुस्थल्यादिगता पृथिवी तस्या एकं वर्षसहस्रमुत्कृष्टमायुः, शुद्धा—कुमारमृत्तिका तस्या द्वादश वर्षसहस्राणि, वालुका—सिकता तस्याश्चतुर्दश

१ अउणपन्नासं-मु ॥ २ ठिइउ० इति बृहत्संग्रहण्यां पाठ ॥ ३ तुलना-बृहत्सं. वृत्तिः प. १२१ तः ॥

[1]वर्षसहस्राणि, मनःशिला प्रतीता तस्याः षोडश, शर्करा—दृषत्कर्करिका तस्या अष्टादश, खरपृथिवी— [2]शिला-पाषाणरूपा तस्या द्वाविंशतिर्वर्षसहस्राण्युत्कृष्टमायुः, जघन्यं तु सर्वत्राप्यन्तर्मुहूर्तमिति ॥१८॥१८६॥

सम्प्रति 'एएसिं तणुमाणं' ति सप्ताशीत्यधिकशततमं द्वारमाह—

१८७द्वारे एकेन्द्रियादीनां तनुमानम् गाथा १०९९-११०४ प्र.आ. ३२५

जोयणसहस्समहियं ओहपएगिंदिए तरुगणेसु ।
मच्छजुयले सहस्सं उरगेसु य गब्भजाईसु ॥१०९९॥ [बृहत्सं. गा. ३०७]
उस्सेहंगुलगुणियं जलासयं जमिह जोयणसहस्सं ।
तत्थुप्पन्न नलिणं विन्नेयं भणिय[3]मित्तं तु ॥११००॥
जं पुण जलहिदहेसुं पमाणजोयणसहस्समाणेसुं ।
उप्पज्जइ वरपउमं तं जाणसु भूवियारं ति[4] ॥११०१॥
वणऽणंतसरीराणं [5]एगमनिलसरीरगं पमाणेणं ।
अनलोदगपुढवीणं असंखगुणिया भवे वुड्ढी ॥२॥
विगलिंदियाण बारस जोयणा तिन्नि चउर कोसा य ।
सेसाणोगाहणया अंगुलभागो असंखिज्जो ॥३॥
गब्भचउप्पय छग्गाउयाइं भुयगेसु गाउयपुहुत्तं ।
पक्खीसु धणुपुहुत्तं मणुएसु य गाउया तिन्नि ॥४॥ [बृहत्सं.गा. ३११, ३१०, ३०८]

१ वर्षसहस्राणि-ख. नास्ति । वर्ष० वि. सि. नास्ति ॥ २ सिलारूपा-सि. ॥ ३ माणं ति-मु. ॥ ४ तु- ता. ॥ ५ एग अनि० ता. ॥

'जोयण सहस्स' गाहा, ओघपदे—सामान्यचिन्तायामेकेन्द्रिये पृथिव्यादिविशेषानाकाङ्क्षितानामेकेन्द्रियाणामित्यर्थः; विशेषचिन्तायां तरुगणेषु—प्रत्येकवनस्पतीनामित्यर्थः, उत्कर्षतः सातिरेकं योजनसहस्रं शरीरप्रमाणमवसेयम्, एतच्च समुद्रे गोतीर्थादिगतलतानलिननालाद्यधिकृत्य वेदितव्यम्; अन्यत्रैतावदौदारिकशरीरस्यासम्भवात् । तथा पञ्चेन्द्रियतिर्यञ्चस्त्रिविधाः—जलचराः स्थलचराः खेचराश्च, जलचराः सम्मूर्छजा गर्भजाश्च पुनः प्रत्येकमपर्याप्ताः[1] पर्याप्ताश्चेत्येवं चतुर्विधाः; स्थलचरास्तु द्विविधाः—चतुष्पदाः परिसर्पाश्च; चतुष्पदाः पुनरपि सम्मूर्छजा गर्भजाश्च पुनः प्रत्येकमपर्याप्ताः पर्याप्ताश्चेत्येवं चतुर्विधाः; परिसर्पास्तु द्विविधाः—उरःपरिसर्पा भुजपरिसर्पाश्च; उभये अपि प्रत्येकं चतुष्पदवच्चतुर्विधाः; इत्येवं स्थलचराः सर्वेऽपि द्वादशविधाः । खेचरास्तु जलचरवच्चतुर्विधाः; तदेवं विंशतिभेदानां तिरश्चां तनुमानचिन्तायां मत्स्यानां—जलचराणां युगले—सम्मूर्छज-गर्भजलक्षणे उरगेषु च—उरःपरिसर्पेषु सर्पादिषु, [2]गर्भजातिषु-गर्भजेषु प्रत्येकं परिपूर्णं योजनसहस्रमिति ॥९१॥

प्र.आ. ३२५

ननु तनुप्रमाणमुत्सेधाङ्गुलेन 'उस्सेहपमाणओ मिणसु देहं' [बृहत्सं. गा. ३४९] इति वचनात्; समुद्र-पद्म-हृदादीनां तु प्रमाणं प्रमाणाङ्गुलेन; ततः समुद्रादीनां योजनसहस्रा[3]वगाहत्वात्तद्गतपद्मनालादीनामुत्सेधाङ्गुलापेक्षयाऽत्यंतदैर्घ्यं प्राप्नोतीत्यत आह— [4]'उस्सेह' मित्यादि, 'ज' मित्यादि, उत्सेधाङ्गुलेन 'परमाणू रहरेणू' इत्यादिक्रमनिष्पन्नेन गुणितः—प्रमितः सन् योऽसौ जलाशयः—समुद्रगोतीर्थादिरिह—मनुष्यलोके योजनसहस्रप्रमाणो भवति, तत्र समुत्पन्नं नलिनं—पद्मं भणितमानं—पूर्वोक्तकिञ्चित्समधिक- ॥३१४॥

१ ०प्ता-जे ॥ २ गर्भजातिषु-मु नास्ति ॥ ३ ०गाहनत्वा०-मु० ॥ ४ उस्सेहं गुलेत्यादिगाथाद्वयम्-खं. ॥

योजनसहस्रप्रमाणं विज्ञेयम्, यत् पुनः प्रमाणाङ्गुलानां योजनसहस्रमानेषु जलधि-ह्रदादिषु वरं–प्रधानं पद्ममुत्पद्यते तज्जानीहि भूविकारं-पृथिवीविकारमिति।

इदमुक्तं भवति–इह समुद्रमध्ये प्रमाणाङ्गुलतो योजनसहस्रावगाहे यानि पद्मानि तानि पृथिवीपरिणामरूपाण्येव। यथा श्रीदेवतायाः पद्महूदे पद्मम्; यानि पुनः शेषेषु गोतीर्थादिषु स्थानेषु पद्मानि तानि वनस्पतिपरिणामरूपाण्यपि भवन्तिः तानि च शेषेषु जलाशयेषु, वल्ल्यादयश्चोत्कर्षतो यथोक्तमाना भवन्ति। तथा चोक्तं विशेषणवत्याम्—

\+ "पुढवीपरिणामाइं ताइं किर सिरिनिवासपउमं व। गोतित्थेसु वणस्सइपरिणामाइं तु होज्जाहि ॥१॥
जन्थुस्सेहंगुलओ सहस्समवसेसएसु य जलेसु[1]। वल्लीलयादओऽवि य सहस्समायामओ होंति ॥२॥"

[गा. ७-८] ॥११००–११०१॥

तथा प्रत्येकवनस्पतिवर्जितानां पंचानामपि पृथिव्यादीनामङ्गुलासङ्ख्येयभागमानाऽवगाहना वक्ष्यते; ततस्तत्र विशेषमाह— [2]'वणे' त्यादि, 'विगले' त्यादि, 'गब्भे' त्यादि, 'वण' त्ति वनस्पतीनाम्, 'अणंत' त्ति अनन्तकायिकानां सूक्ष्माणां यान्यसङ्ख्येयानि शरीराणि तेषां प्रमाणेन–मानेनैकमनिलशरीरकं–वायुशरीरम्, किमुक्तं भवति?–सूक्ष्मसाधारणवनस्पतीनामसङ्ख्यातैः शरीरैस्तुल्यमेकं सूक्ष्मं वायुशरीरमिति। उक्तं च प्रज्ञप्तौ—

१ ०सु - मु.। तुलना-विशेषणवती॥ २ वणणंत गाहा वणत्ति-ख.॥
\+ तानि किल पृथ्वीपरिणामानि श्रीनिवासपद्ममिव। गोतीर्थेषु वनस्पतिपरिणामानि तु भवेयुः ॥१॥
यत्रोत्सेधांगुलतः सहस्रमवशेषेषु च जलेषु। वल्लीलतादयोऽपि च सहस्रामायामतो भवन्ति ॥२॥

'अणंताणं सुहुमवणस्सइकाइयाणं जावइया सरीरा से एगे सुहुमवाउसरीरे" [भगवतीसूत्र १९।३। सू.६५२] त्ति अनन्तकायिकानां यावन्ति शरीराणि तदेकं सूक्ष्मं वायुशरीरम्, तावत्शरीरप्रमाणमित्यर्थः; यावद्ग्रहणाच्चासङ्ख्यातानि शरीराणि ग्राह्याणि, अनन्तानामपि वनस्पतीनामेकाद्यसङ्ख्येयान्तशरीरत्वेनानन्तानां शरीराणामभावात्; ततो वायुकायिकशरीरादनलोदकपृथिवीनाम्–अग्निजलपृथिवीकायिकशरीराणां सूक्ष्माणां बादराणां च यथाक्रममसङ्ख्यगुणा भवति वृद्धिः ।

इयमत्र भावना–यावत्प्रमाणमेकं [1]सूक्ष्मवायुकायिकशरीरं ततोऽप्यसङ्ख्यातगुणमेकं सूक्ष्मतेजस्कायिकशरीरम्, ततोऽसङ्ख्यातगुणमेकं सूक्ष्माप्कायिकशरीरम्, ततोऽप्यसङ्ख्यातगुणमेकं सूक्ष्मपृथिवीकायिकशरीरम्, ततोऽप्यसङ्ख्यातगुणमेकं बादरवायुशरीरम् ततोऽसङ्ख्यातगुणमेकं बादराग्निशरीरम्, ततोऽप्यसङ्ख्यातगुणमेकं [2]बादराप्कयिकशरीरम्, ततोऽप्यसङ्ख्यातगुणमेकं बादरपृथिवीशरीरम्, तस्मादप्यसङ्ख्यातगुणमेकं बादरनिगोदशरीरमिति । एतच्च सर्वमपि भगवत्त्येकोनविंशतितमशतकतृतीयोद्देशकानुसारेणोक्तं न तु निजमनीषिकयेति । इह च पृथिव्यादीनामङ्गुलासङ्ख्येयभागमात्रावगाहनात्वेऽप्यसङ्ख्येयभेदत्वादङ्गुलासङ्ख्येयभागस्येतरेतरापेक्षयाऽसङ्ख्येयगुणत्वं न विरुद्ध्यते ॥२॥

अथ द्वीन्द्रियादीनामव[3]गाहनामानमाह–'विगलेंदिय' गाहा, विकलेन्द्रियाणां–द्वित्रिचतुरिन्द्रियाणां यथाक्रमं शरीरमानं द्वादश योजनानि, त्रयः क्रोशाः चत्वारः क्रोशाः । इयमत्र भावना–द्वीन्द्रियाणां

१ सूक्ष्मवायुकायिकादिशरीरं–सि. वि ॥ २ बादरप्कायश० खं. ॥ ३ ०गाहनामाह- विकलेन्द्रियाणां- मु. ॥

शङ्खादीनामुत्कर्षतो देहमानं द्वादश योजनानि, त्रीन्द्रियाणां कर्णशृगाली-मत्कोटकादीनां त्रीणि गव्यूतानि, चतुरिन्द्रियाणां भ्रमरादीनामेकं योजनम्, शेषाणां पृथिव्यप्तेजोवायूनां साधारणवनस्पतीनां संमूर्छिम-मनुष्याणां सर्वेषामपि चापर्याप्तजीवानामुत्कर्षतोऽवगाहना-देहमानमङ्गुलासङ्ख्येयो भागः ॥३॥

अथ **तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां च देहमानमाह**- गर्भजचतुष्पदानां-हस्त्यादीनामुत्कृष्टं देहमानं षड्गव्यूतानि, भुजगेषु गर्भजेषु-गोधानकुलादिषु गव्यूतपृथक्त्वम्, पृथक्त्वं च द्विप्रभृत्यानवभ्यः । पक्षिषु-गृध्रादिषु 'व्याख्यानतो विशेषप्रतिपत्ते' [ ] गर्भजेषु संमूर्छिमेषु च धनुःपृथक्त्वम्, मनुष्येषु च गर्भजेषु त्रीणि गव्यूतानि, '**मणुएसु य**' त्ति चकारोऽनुक्तसमुच्चये; ततः संमूर्छिमचतुष्पदानां गवादीनामुत्कर्षतो [1]देहमानं गव्यूतपृथक्त्वम्, संमूर्छिमभुजगानां धनुःपृथक्त्वम्, संमूर्छिमोरगाणां च योजनपृथक्त्वम् । एतच्च [2]प्रज्ञापनावगाहनासंस्थानपदोक्तानुसारेणास्माभिरभिहितमिति । इदं चोत्कर्षतः सर्वमपि देहमानम्, जघन्यतस्तु सर्वेषामपि जीवानामङ्गुलस्यासङ्ख्याततमो भागः, स चोपपातसमये बोद्धव्यः ॥ ४ ॥ १८७ ॥

सम्प्रति [3]'इंदियसरूवविसओ य एएसिं' ति अष्टाशीत्यधिकशततमं द्वारमाह—

**कायंबपुप्फगोलय १ मसूर २ अइमुत्तयस्स कुसुमं च ३ ।**
**सोयं १ चक्खू २ घाणं ३ खुरप्पपरिसंठिअं रसणं ४ ॥ ५ ॥**

१ देहं ग० सि.वि. ॥ २ प्रज्ञापनासूत्रे एकविंशं पदमित्यर्थः ॥ ३ इंदियविसओ-खं. । इंदियविसयविसओ-सि.वि. ॥

नाणागारं फासिंदियं तु बाहल्लओ य सव्वाइं ।
अंगुलअसंखभागं एमेव पुहुत्तओ नवरं ॥ ६ ॥
अंगुलपुहुत्त रसणं फरिसं तु सरीरवित्थडं भणियं ।
बारसहिं जोयणेहिं सोयं [1]परिगिण्हए सद्दं ॥ ७ ॥
रूवं गिण्हइ चक्खू जोयणलक्खाओ साइरेगाओ ।
गंधं रसं च फासं जोयणनवगाउ [2]सेसाइं ॥ ८ ॥
अंगुलअसंखभागा मुणंति विसयं जहन्नओ मोत्तुं ।
चक्खुं तं [3]पुण जाणइ अंगुलसंखिज्जभागाओ ॥ ९ ॥

'कायंब' गाहा, इन्दनादिन्द्रः—आत्मा सर्वद्रव्योपलब्धिरूपपरमैश्वर्ययोगात्; तस्य लिङ्गं–चिह्नमविनाभावि इन्द्रियम्; तद् द्विधा–द्रव्येन्द्रियं भावेन्द्रियं च । तत्र द्रव्येन्द्रियं द्विधा– [4]निर्वृत्तिरूपमुपकरणरूपं च । [5]निर्वृत्तिर्नाम प्रतिविशिष्टसंस्थानविशेषः । साऽपि द्विधा–बाह्या आभ्यन्तरा च । तत्र बाह्या [6]कर्ण-कर्पटिकादिरूपा; सा च विचित्रा न [7]प्रतिनियतरूपतया [8]व्यपदेष्टुं शक्यते; तथाहि–मनुष्यस्य श्रोत्रे नेत्रयोरुभयपार्श्वतो भाविनी [9]भ्रुवौ चोपरितने श्रवणबन्धापेक्षया समे, वाजिनो नेत्रयोरुपरि

१ परिगे० इति प्रज्ञापनावृत्तौ प. ३००B ॥ २ सेसाणि–मु. ॥ ३ परिजाणइ–ता. ॥ ४ निर्वृत्तिरूपकरणरूपं–लं. वि. सि. ॥ ५ तुला–प्रज्ञापनावृत्ति प. २९३ तः ॥ ६ कर्णपर्प० सि. । बाह्या पर्प० इति प्रज्ञापना. वृत्तौ ॥ ७ प्रतिनियत० जे. नास्ति । ०नियत० सि. नास्ति । ८ अश० जे.सि. ॥ ९ भ्रवा-सि. । भ्रुवौ-इति प्रज्ञापनावृत्तौ पाठः ॥

तीक्ष्णे चाग्रभागे इत्यादिजातिभेदान्नानाविधा । [1]आभ्यन्तरा तु निर्वृत्तिः सर्वेषामपि जन्तूनां समाना । तामेव चाधिकृत्य प्रस्तुतसूत्रोक्तं संस्थानमवसेयम् ; केवलं स्पर्शनेन्द्रियनिर्वृतेः प्रायो न बाह्याभ्यन्तर-[2]भेदः, [3]तत्त्वार्थमूलटीकायां तथाऽभिधानात् ।

उपकरणं–खड्गस्थानीयाया बाह्यनिर्वृत्तेर्या खड्गधारासमाना स्वच्छतरपुद्गलसमूहात्मिकाभ्यन्तरा [4]निर्वृत्तिः तस्याः शक्तिविशेषः । इदं चोपकरणरूपं द्रव्येन्द्रियमन्तर्निर्वृत्तेः कथञ्चिदर्थान्तरम् । शक्तिशक्तिमतोः कथञ्चिद्भेदात् । कथञ्चिद्भेदश्च सत्यामपि [5]तस्यामान्तर्निर्वृत्तौ द्रव्यादिनोपकरणस्य विघातसम्भवात् । तथाहि–सत्यामपि कदम्बपुष्पाद्याकृतिरूपायामन्तर्निर्वृत्तावतिकठोरतरघनगर्जितादिना शक्त्युपघाते सति न परिच्छेत्तुमीशते जन्तवः शब्दादिकमिति ।

भावेन्द्रियमपि द्विधा–लब्धिरुपयोगश्च, तत्र लब्धिः–श्रोत्रेन्द्रियादिविषयः सर्वात्मप्रदेशानां तदावरण कर्मक्षयोपशमः; उपयोगः–स्वस्वविषये लब्धिरूपेन्द्रियानुसारेणात्मनो [6]व्यापारः प्रणिधानमिति । तच्च पञ्चधा–श्रोत्रादिभेदात् । तत्र श्रोत्रमाभ्यन्तरीं निर्वृत्तिमधिकृत्य कदम्बपुष्पाकारं मांसगोलकरूपम्, चक्षुः किञ्चित्समुन्नतमध्यपरिमण्डलाकारमसूराख्यधान्यविशेषसदृशम्, घ्राणमतिमुक्तककुसुमदलचन्द्रकवत् किञ्चिद्[7]वृत्ताकारमध्यविनतम्, प्रदीर्घत्र्यस्रसंस्थितं कर्णाटकायुधं क्षुरप्रस्तत्परिसंस्थितं–तदाकारं रसनेन्द्रियमिति ॥५॥

प्र. आ. ३२७

१ अभ्य० खं. वि. जे. प्रज्ञापनावृत्तौ च । २ ०भेदाः–सि. ॥ ३ तत्त्वार्थसूत्रस्य [२।१७] वृत्तिर्द्रष्टव्या ॥
४ निवृत्तिः तस्याः निवृत्तिः तस्याः–खं. ॥ ५ तस्यामन्त० मु. ॥ ६ व्यापारप्रणि० मु. ॥
७ वृत्ताकारमध्यविनतं–मु. जे.खं. । विनताकारमध्यविनतं–सि. । वितता० वि० ॥

तथा—'नाणे' त्यादि, स्पर्शनेन्द्रियं पुनर्नानाकारम्–अनेकसंस्थानसंस्थितम् शरीरस्यासङ्ख्येयभेदत्वात् । तथा [1]बाहल्यतः सर्वाण्यपीन्द्रियाण्यङ्गुलस्यासङ्ख्येयो भागः ।

[2]ननु यदि स्पर्शनेन्द्रियस्याप्यङ्गुलासङ्ख्येयभागो [3]बाहल्यं ततः कथं खड्गाद्यभिघाते अन्तः शरीरस्य वेदनानुभवः ?, तदयुक्तम्, वस्तुतत्त्वापरिज्ञानात् । त्वगिन्द्रियस्य हि विषयः शीतादयः स्पर्शाः । यथा चक्षुषो रूपम् । न च खड्गाद्यभिघाते अन्तः शरीरस्य [4]शीतादिस्पर्शवेदनमस्तीति; किन्तु केवलं दुःखवेदनम् । तच्चात्मा सकलेनापि शरीरेणानुभवति, न केवलेन त्वगिन्द्रियेण, ज्वरादिवेदनावत् । ततो न कश्चिद्दोषः ।

अथ शीतलपानकादिपाने अन्तः शीतस्पर्शवेदनाऽप्यनुभूयते, ततः कथं सा घटते ?, उच्यते, इह त्वगिन्द्रियं सर्वत्रापि प्रदेशपर्यन्तवर्ति विद्यते, तथा पूर्वसूरिभिर्व्याख्यानात् । तथा च प्रज्ञापनामूलटीका--"सर्वप्रदेशपर्यन्तवर्तित्वात्त्वचोऽभ्यन्तरतोऽपि शुषिरस्योपरि त्वगस्त्येव" [ ] इति । ततोऽभ्यन्तरतोऽपि शुषिरस्योपरि त्वगिन्द्रियस्य भावादुपपद्यते अन्तरपि शीतस्पर्शवेदनानुभवः । तथा एवमेव—अङ्गुलासङ्ख्येयभागप्रमाणान्येव पृथुत्वतो–विस्तरतोऽपीन्द्रियाणि भवन्ति ॥६॥

नवरं रसन-स्पर्शनयोर्विशेषः, तमेवाह—'अंगुले' त्यादि गाथापूर्वार्धम्, अङ्गुलपृथक्त्व[5]विस्तरं रसनेन्द्रियम् । स्पर्शनं पुनः शरीरविस्तृतं भणितम् । यस्य जीवस्य यावन्मानं शरीरं स्पर्शनमपि तस्य [5]विस्तरतस्तावत्प्रमाणमित्यर्थः ॥

१ बाहुल्यतः–जे.सि. ॥ २ तुला-प्रज्ञापनावृत्तिः प. २९४ ॥ ३ बाहुल्यं–जे.सि. ॥ ४ शीतादिस्पर्शने–मु. । शीतादिस्पर्शो–खं. । सि. प्रतौ प्रज्ञापनावृत्तावपि–शीतादिस्पर्शवे० इति ॥ ५ ०विस्तारं–मु. ॥

अथेन्द्रियविषयमानमाह—'बारे' त्यादि [1]सार्द्धगाथा, द्वादशभ्यो योजनेभ्य आगतं घनगर्जितादि-शब्दमुत्कृष्टतो गृह्णाति श्रोत्रम्, न परतः। [2]परत आगताः खलु ते शब्दपुद्गलास्तथास्वाभाव्यान्मन्दपरिणामास्तथोपजायन्ते येन स्वविषयं श्रोत्रविज्ञानं नोत्पादयितुमीशाः। श्रोत्रेन्द्रियस्य च तथाविधमत्यद्भुतं बलं न विद्यते येन परतोऽप्यागतं [3]शब्दं शृणुयादिति ॥७॥

तथा चक्षुरिन्द्रियमुत्कर्षतः सातिरेकाद्योजनलक्षादारभ्य कटकुड्यादिभिरव्यवहितं रूपं गृह्णाति–परिच्छिनत्ति। परतोऽव्यवहितस्यापि परिच्छेदे चक्षुषः शक्त्यभावात्। [4]एतच्चाभासुरद्रव्यमधिकृत्योच्यते। भासुरं तु [5]द्रव्यम् प्रमाणाङ्गुलनिष्पन्नेभ्य एकविंशतियोजनलक्षेभ्योऽपि परतः पश्यन्ति। यथा [6]पुष्करवरद्वीपार्धे मानुषोत्तरनगनिकटवर्त्तिनो नराः कर्कसंक्रान्तौ सूर्यबिम्बम्। उक्तं च—

"इगवीसं खलु लक्खा चउतीसं चेव तह सहस्साइं। तह पंच सया भणिया [7]सत्ततीसाए अइरित्ता ॥१॥
इह नयणविसयमाणं पुक्खरदीवड्ढवासिमणुयाणं। पुव्वेण य अवरेण य पिहं पिहं होइ नायव्वं ॥२॥"[ ]

तथा शेषाणि–घ्राण-रसन-स्पर्शनेन्द्रियाणि क्रमेण गन्धं रसं स्पर्शं च प्रत्येकमुत्कर्षतो नवभ्यो योजनेभ्य आगतं [8]गृह्णन्ति; न परतः। परत आगतानां मन्दपरिणामत्वभावात् घ्राणादीन्द्रियाणां च तथारूपाणामपि तेषां परिच्छेदं कर्तुमशक्तत्वात् ॥८॥

१ सार्धा–मु.॥ २ तुला–प्रज्ञापनावृत्तिः प. २६६ ॥ ३ शब्द–सि.वि. नास्ति ॥ ४ विशेषावश्यकभा. गा. ३४३ तः द्रष्टव्या ॥ ५ द्रव्यमधिकृत्य–मु.॥ ६ तुला–प्रज्ञापनावृत्तिः प. ३०१ A ॥ ७ सत्तत्ती० इति प्रज्ञापनावृत्तौ सि. प्रतौ च पाठः ॥ ८ गृह्णाति–सि.वि.॥

अथ जघन्यं विषयमानमाह—'अंगुले' त्यादि, चक्षुरिन्द्रियं मुक्त्वा शेषाणि चत्वारि श्रोत्रादीनि जघन्यतोऽङ्गुलासङ्ख्येयभागादागतं स्वस्वविषयं शब्दादिकं जानन्ति। प्राप्तार्थपरिच्छेदकत्वात् । चक्षुः [1]पुनरप्राप्तकारित्वाज्जघन्यतोऽ[2]ङ्गुलमङ्ख्येयभागमात्रव्यवस्थितं पश्यतिः न तु ततोऽप्यर्वाक्तरमिति । प्रतिप्राणि प्रतीतश्चायमर्थः । तथा च नातिसन्निकृष्टमञ्जनरजोमलादिकं चक्षुः पश्यतीति ।

इह च पृथुत्वपरिमाणं स्पर्शनेन्द्रियव्यतिरेकेण शेषाणां चतुर्णामिन्द्रियाणामात्माङ्गुलेन प्रतिपत्तव्यम् , स्पर्शनेन्द्रियस्य तूत्सेधाङ्गुलेन, विषयपरिमाणं पुनः सर्वेषामप्यात्माङ्गुलेनैव । अत्र चोभयत्राप्युपपत्तिः सविस्तरतरा भाष्यादवसातव्या ॥९॥ १८८॥

इदानीं 'लेसाउ' त्ति एकोननवत्यधिकशततमं द्वारमाह—



पुढवीआउवणस्सइबायरपत्तेसु लेस चत्तारि ।
गब्भे तिरियनरेसु छल्लेसा तिन्नि सेसाणं ॥१०॥ [बृहत्सं. गा. ३४२]

'पुढवी०' गाहा, [3]बादरशब्दः प्रत्येकमभिसम्बध्यते, प्रत्येकवनस्पतीनां च स्वरूपोपदर्शनार्थमेव व्यभिचाराभावात् । पर्याप्त इति विशेषणं च सामर्थ्याद् द्रष्टव्यम् । अन्यथा तेजोलेश्याया अयोगात् । ततो बादरपर्याप्तेषु पृथिवीकायिकेष्वप्कायिकेषु प्रत्येकवनस्पतिषु चाद्याश्चतस्रः कृष्ण-नील-कापोत-तेजोरूपा लेश्या भवन्ति । तेजोलेश्या कथमवाप्यते [4]इति चेद् , उच्यते, ईशानान्तदेवानामेतेषूत्पादात्कियन्तमपि



१ पुनरप्राप्ति० सि.वि.॥ २ ०ङ्गुलकस० सि.वि. ॥ ३ तुला—बृहत्सङ्ग्रहणि मलय०वृत्तिः प. १३०॥
४ नवा इति—खं. वि. सि. ॥

कालं तेजोलेश्यापि सम्भवति । यल्लेश्या हि जन्तवो म्रियन्ते परभवेऽपि तल्लेश्या एवोत्पद्यन्ते । न पुनः पाश्चात्यभवान्त्यसमयेऽन्यो लेश्यापरिणामोऽन्यश्चागामिकभवाद्यसमये ।

यदागमः—●"जल्लेसाइं दव्वाइं आइत्ता कालं करेइ तल्लेसेसु उववज्जइ' [ ] त्ति । केवलं तिर्यङ्नरा आगामिभवसम्बन्धिलेश्याया अन्तमुहूर्तेऽतिक्रान्ते, सुरनारकास्तु स्वस्वभवसम्बन्धिलेश्याया अन्तमूहूर्ते शेषे सति परभवमासादयन्ति ।

गर्भजतिर्यङ्मनुष्येषु [1]षडपि लेश्याः; तेषामनवस्थितलेश्याकत्वात् । तथाहि—तिरश्चां पृथिवीकायिकादीनां नराणां सम्मूर्छिम-गर्भजानां शुक्ललेश्यावर्जा याः काश्चिल्लेश्याः सम्भवन्ति ताः प्रत्येकं जघन्यत उत्कर्षतश्चान्तमुहूर्तस्थितयः । शुक्ललेश्या तु जघन्यतोऽन्तमुहूर्तावस्थाना उत्कर्षतः किञ्चिन्न्यूननववर्षोनपूर्वकोटिप्रमाणेति । इयं चोत्कृष्टा स्थितिः पूर्वकोटेरुद्धूर्वं संयमावाप्तेरभावात् । पूर्वकोट्यायुषः किञ्चित्समधिकवर्षाष्टकादूर्ध्वमुत्पादितकेवलज्ञानस्य केवलिनोऽवसेया । अन्येषां तूत्कर्षतोऽप्यन्तमुहूर्तावस्थानैवेति ।

शेषाणां [2]तेजोवायूनां सूक्ष्मपृथिव्यम्बुवनस्पतीनां साधारणानामपर्याप्तबादरपृथिव्यम्बुप्रत्येकवनस्पतीनां द्वित्रिचतुरिन्द्रियाणां सम्मूर्छिमपञ्चेन्द्रियतिर्यङ्नराणां च तिस्रः—कृष्ण-नील-कापोतनामानो लेश्या भवन्तीति ॥१०॥ १८९॥

इदानीम् 'एयाणं[3] जत्थ गइ' त्ति नवत्यधिकशततमं द्वारमाह—

● यल्लेश्यानि द्रव्याणि आदाय कालं करोति तल्लेश्येषूत्पद्यते । १ षडपि लेश्याः लेश्याकत्वात्–जे. सि. ॥ २ तेजोवायूनां सूक्ष्मप्रभृत्यम्बूनां सा० खं. । तेजोवायूक्ष्मपृथिवीवनस्पत्यन्तानां–सि. ॥ ३ ०णा- मु. ॥

एगेंदियजीवा जंति नरतिरिच्छेसु जुयलवज्जेसु[1] ।
अमणतिरियावि एवं नरयंमिवि जंति ते पढमे[1] ॥११॥
तह संमुच्छिमतिरिया भवणाहिववंतरेसु गच्छंति ।
जं तेसिं उववाओ पलियासंखेज्जआऊसु[1] ॥१२॥
पंचिंदियतिरियाणं [2]उववाउक्कोसओ सहस्सारे ।
नरएसु समग्गेसुवि वियला अजुयलतिरिनरेसु ॥१३॥
नरतिरिअसंखजीवी जोइसवज्जेसु जंति देवेसु ।
नियआउयसमहीणाउएसु ईसाणअंतेसु ॥१४॥
उववाओ तावसाणं उक्कोसेणं तु जाव जोइसिया ।
जावंति बंभलोगो चरगपरिव्वायउववाओ ॥१५॥
[3]जिणवयउक्किट्ठतवकिरियाहिं अभव्वभव्वजीवाणं ।
गेविज्जेसुक्कोसा गई जहन्ना भवणवईसु ॥१६॥
छउमत्थसंजयाणं उववाउक्कोसओ अ सव्वट्ठे ।
उववाओ सावयाणं उक्कोसेणऽच्चुओ जाव ॥१७॥ [तुला-बृहत्सं. गा. १७०]
उववाओ लंतगंमि चउदसपुव्विस्स होइ उ जहन्नो ।
उक्कोसो सव्वट्ठे सिद्धिगमो वा अकम्मस्स ॥१८॥ [बृहत्सं. गा. १६१]



१ ०मं-ता. ॥ २ उववाउक्कोसो उ-सि.वि. ॥ ३ जिणमय० ता० ॥

अविराहियसामन्नस्स साहुणो सावयस्सऽवि जहन्नो ।
सोहम्मे उववाओ वयभंगे वणयराईसुं ॥१९॥ [तुला-बृहत्सं गा. १७१]
सेसाण तावसाईण जहन्नओ वंतरेसु उववाओ ।
भणिओ जिणेहिं सो पुण नियकिरियठियाण विन्नेओ ॥२०॥ [बृहत्सं. गा. १७२]

'एगेंदियजीवा' गाहा, इह 'एगेंदियजीव' त्ति सामान्योक्तावपि न तेजो-वायवो गृह्यन्ते; तेषां मनुष्येष्वेवानुत्पादात् । उक्तं च—

● 'सत्तममहिनेरइया तेऊ वाऊ अणंतरुव्वट्टा । नवि पावे माणुस्सं तहा असंखाउया सव्वे ॥१॥'

तत एकेन्द्रियजीवाः—पृथिव्यम्बुवनस्पतयो युगलवर्जेषु—युगलधार्मिकवर्जितेषु सङ्ख्यातायुष्केष्वित्यर्थः; नरेषु तिर्यक्षु च यान्ति—उत्पद्यन्ते; न देवनारकासङ्ख्येयवर्षायुस्तिर्यग्नरेष्विति भावः । तथाऽमनस्कतिर्यञ्चोऽपि—असंज्ञिपञ्चेन्द्रिय-तिर्यञ्चोऽप्येवं-पूर्ववत् । सङ्ख्येयायुष्केषु नरतिर्यक्षु समुत्पद्यन्त इति भावः । नरकेऽपि च प्रथमे ते गच्छन्ति । इदमुक्तं भवति—असंज्ञिपञ्चेन्द्रिय[1]तिर्यञ्चश्चतसृष्वपि गतिषूत्पद्यन्ते । केवलं नरकदेवगत्योरुत्पद्यमानानाममीषां विशेषः । तत्र नरकगतौ प्रथमपृथिव्यामेव, न शेषासु । [2]तत्राप्युत्कृष्टतोऽपि पल्योपमासङ्ख्येयभागायुष्केष्वेव जायन्ते, नाधिकायुष्केष्विति ॥११॥

देवगतौ पुनरुत्पद्यमानानां विशेषमाह—'तहे'-त्यादिगाथानवकम् , तथा संमूर्छिमतिर्यञ्चो देवेषू-

---

● सप्तममहीनैरयिकास्तेजोवायू अनन्तरोद्वृत्ताः । नैव प्राप्नुवन्ति मानुष्यं तथाऽसंख्यायुषः सर्वे ॥१॥

१ तिर्यञ्चश्च चतसृ० मु. ॥ २ तथाप्यु० सि० वि. ॥

१९० द्वारे
एकेन्द्रियादीनां गतिः
गाथा-
१११९-
२०

प्र. आ.
३२९

रपद्यमाना भवनपतिव्यन्तरेष्वेव [1]जायन्ते; न ज्योतिष्कादिषु। यस्मात्तेषां–सम्मूर्छिमतिरश्चां देवेषु पल्योपमासङ्ख्यातभागमात्रायुष्केष्वेवोपपातो नाधिकस्थितिष्विति ॥१२॥

'पंचेदिय०' गाहा पञ्चेन्द्रियतिरश्चामुत्कर्षत उपपातः सहस्रारं यावद्भवति। नरकेष्वपि [2]समग्रेषु–सर्वास्वपि नरकपृथिवीषु। इदमत्र तात्पर्यं–सङ्ख्यातायुष्कसंज्ञितिर्यक्पञ्चेन्द्रियाश्चतसृष्वपि गतिषूत्पद्यन्ते। केवलं देवगतौ सहस्रारकल्पमेव यावदुत्पद्यन्ते; न तु [3]परेणानतादिषु। तथाविधयोग्यताऽभावादिति। तथा विकला–द्वित्रिचतुरिन्द्रिया युगलवर्जेषु तिर्यक्षु मनुष्येषु चोत्पद्यन्ते, न देवनारकेषु ॥१३॥

'नरतिरि०' गाहा, असङ्ख्यजीविनः–असङ्ख्यवर्षायुषो नरास्तिर्यञ्चश्च ज्योतिष्कवर्जितेषु देवेषु यान्ति। देवगतिं विमुच्य शेषे गतित्रये मोक्षे च [4]नैते गच्छन्तीत्यर्थः। इह च यद्यपि सामान्येनासङ्ख्येयवर्षायुष्का[5]नरतिर्यञ्चो भणितास्तथापि 'सूचकत्वात् सूत्रस्य' विशिष्टा एव [6]खचरतिर्यक्पञ्चेन्द्रिया अन्तरद्वीपजतिर्यग्नराश्च वेदितव्याः। तथाहि–असङ्ख्येयवर्षायुषो देवेषूत्पद्यमाना निजायुषः समस्थितिषु हीनस्थितिषु चोत्पद्यन्ते, नाधिकस्थितिषु। ततः पल्योपमासङ्ख्येयभागमात्रेणासङ्ख्येयवर्षायुषः [7]खचरतिर्यक्पञ्चेन्द्रिया अन्तरद्वीपजतिर्यग्नराश्च ज्योतिष्कवर्जेषु, उपलक्षणमेतत्, ज्योतिष्क-सौधर्मेशानवर्जेषूत्पद्यन्ते, न ज्योतिष्कादिष्वपि अधिकस्थितिषूत्पादाभावात्, ज्योतिष्केषु हि जघन्यतोऽपि पल्योपमाष्टमभागः सौधर्मेशानयोश्च पल्योपमं स्थितिरिति।

॥३२६॥

---

१ गच्छन्ति–खं.॥ २ समग्रेषु–सर्वास्वपि–जे. सि. नास्ति ॥ ३ परत आनतादिषु-मु.॥ ४ नैव ते–मु.। नैते–खं. वि. सि.॥ ५ ०षो-खं। ०ष्को-सि.॥ ६-७ खेचर० मु.॥

शेपास्त्वसङ्ख्येयवर्षायुषो हैमवतादिक्षेत्रभाविनस्तथा सुपमसुषमादिषु त्रिष्वरकेषु भरतैरवतभाविनश्च तिर्यग्मनुष्या निजायुषः सम-हीनायुष्केषु सर्वेष्वपीशानान्तेषु गच्छन्ति । तत ऊर्ध्वं तु सर्वथा निषेधः । यत ईशानादूर्ध्वं सनत्कुमारादिषु जघन्यतोऽपि सागरोपमद्वयादिकैव स्थितिः । असङ्ख्यातवर्षायुषां तिर्यङ्मनुष्याणां पुनरुत्कर्षतोऽपि त्रीण्येव पल्योपमानीति ॥१४॥

'उववाओ' गाहा, तापसा—वनवासिनो मूल-कन्द-फलाहारा बालतपस्विनः, तेषामुपपात उत्कर्षतो भवति यावज्ज्योतिष्काः । तत ऊर्ध्वं [1]तु नोत्पद्यन्त इति भावः । तथा चरकपरिव्राजका—धाटिभैक्षोपजीविनस्त्रिदण्डिनः, अथवा चरकाः—कच्छोटकादयः, परिव्राजकाः—कपिलमुनिसूनवः, चरकाश्च परिव्राजकाश्च तेषामुत्कर्षत उपपातो यावद्ब्रह्मलोकः ॥ १५ ॥

'जिणवय'० गाहा, जिनोक्तानि यानि व्रतानि—प्राणातिपातविरमणादीनि, यच्चोत्कृष्टं—विशिष्टमष्टमादितपो याश्च क्रियाः—प्रतिदिनानुष्ठेयप्रत्युपेक्षणादिकाः, एतैः सर्वैरपि भव्यानामभव्यानां च मिथ्यादृशां जीवानां देवेषूत्पद्यमानानामुत्कृष्टा गतिर्ग्रैवेयकेषु । इयमत्र भावना—ये किल भव्या अभव्या वा सम्यक्त्वविकलाः सन्तः श्रमणगुणधारिणो निखिलसामाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणश्च तेऽपि केवलक्रियाकलापप्रभावत उपरितनग्रैवेयकान् यावदुत्पद्यन्ते एव । असंयताश्चैते सत्यप्यनुष्ठाने चारित्रपरिणाम[2]शून्यत्वादिति । जघन्या तु गतिर्भवनपतिषु । एतच्च देवेषूत्पादापेक्षया द्रष्टव्यम् । (ग्रन्थाग्रं ८००) अन्यथा देवत्वादन्यत्रापि यथाध्यवसायमुत्पादो भवतीति ॥१६॥

१ तु—मु. नास्ति ॥ २ ०शून्यादिति-खं. ॥

'छउमत्थ'० गाहा, छाद्यते—आव्रियते यथाऽवस्थितमात्मनः स्वरूपं येन तच्छद्म—ज्ञानावरणीयादि-कर्म, तस्मिन् तिष्ठन्तीति छद्मस्थाः, ते च ते संयताश्च छद्मस्थसंयताः; तेषामुत्कर्षत उपपातः सर्वार्थसिद्धे महाविमाने । श्रावकाणां— [1]देशविरतमनुष्याणां पुनरुपपात उत्कर्षतोऽच्युतं—द्वादशदेवलोकं यावदिति ॥१७॥

'उववाओ' गाहा, उपपातो लान्तके—षष्ठदेवलोके चतुर्दशपूर्वधरस्य जघन्यतो भवति । उत्कृष्टतस्तु सर्वार्थसिद्धे । अकर्मकस्य—क्षीणाष्टकर्मणः पुनश्चतुर्दशपूर्विणः, उपलक्षणत्वादन्येषां [2]च मनुष्याणां क्षीणकर्मणां सिद्धिगमो—मोक्षावाप्तिर्भवतीति ॥१८॥

'अविराहिय'० गाहा, साधोः प्रव्रज्याकालादारभ्याविराधितश्रामण्यस्य—अखण्डितसर्वविरतिरूपचारित्रस्य, श्रावकस्य चाविराधितश्रामण्यस्य—अखण्डितयथागृहीतदेशचारित्रस्य जघन्य[3] उपपातः सौधर्मे-प्रथमदेवलोके । केवलं तत्रापि साधोर्जघन्या स्थितिः पल्योपमपृथक्त्वम्, श्रावकस्य तु पल्योपममिति । तथा साधूनां श्रावकाणां च निजनिजव्रतभङ्गे [4]जघन्य उपपातो वनचरादिषु । वनचरा—व्यन्तरास्तेषामादयः—प्रथमाः, भवनपतिव्यन्तरादिक्रमेणागमे देवानां प्रसिद्धत्वात् भवनपतय इत्यर्थः; तेषु । तथा चोक्तं प्रज्ञापनायां—

"विराहियसंजमाणं जहन्नेणं भवणवासीसु उक्कोसेणं सोहम्मे कप्पे" [पद २०सू. १४७०] तथा "विराहियसंजमासंजमाणं जहन्नेणं भवणवासीसु[5] उक्कोसेणं जोइसिएसु[6]" [पद. २० सू.१४७०] त्ति अत्र च





१ देशविरति-मु ॥ २ च-मु. नास्ति ॥ ३-४ जघन्यत-मु. ॥ ५-६ ०सु - सि. वि. नास्ति ॥

' [1]'विराधितसंयमानां' [2]विराधितः–सर्वात्मना खण्डितो न पुनः प्रायश्चित्तप्रतिपत्त्या भूयः संधितः संयमः संयमासंयमश्च यैस्ते तथा तेषाम् ॥१९॥

'सेसाण' गाहा, शेषाणां तापसादीनां–तापस-चरक-परिव्राजकादीनां [3]जघन्य उपपातो जिनैः–तीर्थकरैर्भणितो व्यन्तरेषु । प्रज्ञापनायां तु तापसादीनां 'जहन्नेणं भवणवासीसु' [ पद २०, सू. १४७० ] इत्युक्तं, स पुनरुपपातविधिर्निजक्रियास्थितानां–निजनिजागमोक्तानुष्ठाननिरतानाम्, न स्वाचारहीनानामिति ॥२०॥१९०॥

इदानीम् 'एएसिं जत्तो आगइ' त्ति एकनवत्यधिकशततमं द्वारमाह—

नेरइयजुयलवज्जा [4]एगिंदिसु इंति अवरगइजीवा ।
विगलत्तेणं पुण ते हवंति [5]अनिरईय अमरजुयला ॥२१॥
हुंति हु अमणतिरिच्छा नरतिरिया जुयलधम्मिए मोत्तुं ।
गब्भचउप्पयभावं पावंति [6]अजुयलचउगइया ॥२२॥
नेरइया अमरावि य तेरिच्छा माणवा य जायंति ।
मणुयत्तेणं वज्जित्तु जुयलधम्मियनरतिरिच्छा[7] ॥२३॥

१ विराधितसंयमानां-खं. नास्ति । २ विराधितः–सर्वात्मना-सि. नास्ति ॥ ३ जघन्यत-मु.॥ ४ एगिंदिइंसु–सि.॥ ५ अनिरय–मु.॥ ६ अजुयच० खं. । अजुयचउगइया–सि०॥ ७ ०च्छे—मु.॥

**'नेरइय०'** गाहा, नैरयिक-युगलधार्मिकवर्जिता अपरगतिजीवाः सङ्ख्यातवर्षायुषः एकद्वित्रिचतुः-पञ्चेन्द्रियतिर्यङ्नराः सनत्कुमारादिदेवानामेकेन्द्रियेष्वनुत्पादात् भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवाश्च एकेन्द्रियेषु—पृथिव्यादिष्वागच्छन्ति । केवलं तथाभवस्वाभाव्याद्देवास्तेजोवायुवर्जितेषु पर्याप्तबादरेषु [1]च समायान्तीत्यवसेयम् । तथा नैरयिक-देव-युगलधार्मिकवर्जितास्ते—तिर्यङ्नरजीवा विकलेन्द्रियत्वेन—द्वित्रि[2]चतुरिन्द्रियत्वेन भवन्ति, द्वित्रिचतुरिन्द्रियेष्वागच्छन्तीति भावः ॥२१॥

**'छु ति छु'** गाहा, युगलधार्मिकास्तिरश्चो नरांश्च वर्जयित्वा शेषा नरास्तिर्यञ्चश्च भवन्त्यमनस्कतिर्यञ्चः; उपलक्षणत्वादमनस्का मनुजाश्च । इदमुक्तं भवति—सङ्ख्यातवर्षायुष्कनरतिर्यञ्च एवासंज्ञिपञ्चेन्द्रियतिर्यङ्-नरेषूत्पद्यन्ते, न देवनारका इति । तथा युगलधार्मिकनरतिर्यग्वर्जिताश्चतुर्गतिका अपि जीवा गर्भजचतुष्पद-भावं प्राप्नुवन्ति । केवलं देवाः सहस्रारादर्वाग् द्रष्टव्याः । आनतादिदेवानां मनुष्येष्वेवोत्पादात् । एवं शेषाणामपि गर्भजतिर्यक्पञ्चेन्द्रियाणां द्रष्टव्यम् । **जीवाभिगमादौ** चतुर्गतिकजीवानां [3]जलचरादिष्वप्यु-त्पादस्योक्तत्वात् ॥२२॥

**'नेरइया'** गाहा, नैरयिका अमराश्च तथा युगलधार्मिकनरतिर्यग्वर्जितास्तिर्यञ्चो मनुष्याश्च मनुज-त्वेन—गर्भजमनुष्यत्वेनोत्पद्यन्ते ॥२३॥ १९१॥

सम्प्रति **'उप्पत्तिमरणविरहो [4]'जायंतमरंतसंखा'** य' त्ति द्विनवति-त्रिनवत्यधिकशततमं द्वार-युग्ममाह—

१९२-१९३ द्वारयोः उत्पत्ति-मरणविरहः जात-मृत-संख्या च
गाथा ११२४-७
प्र. आ. ३३१
॥३३०॥

---

१ च-मु. नास्ति ॥ २ ०चतुरिन्द्रियेण-खं. ॥ ३ जलचरादिषूत्पा० मु. ॥ ४ जात० खं. ॥

भिन्नमुहुत्तो विगलेंदियाण संमुच्छिमाण य तहेव ।
बारस मुहुत्त गब्भे सव्वेसु जहन्नओ समओ ॥२४॥
उव्वट्टणावि एवं संखा समएण सुरवरु तुल्ला ।
नरतिरियसंख सव्वेसु [1]जंति सुरनारया गब्भे ॥२५॥
बारस मुहुत्त गब्भे मुहुत्त सम्मुच्छिमेसु चउवीसं ।
उक्कोसविरहकालो दोसुवि य जहन्नओ समओ ॥२६॥
एमेव य उव्वट्टणसंखा समएण [2]सुरवरुतुल्ला ।
मणुएसु उववज्जेऽसंखाउय मोत्तु सेसाओ ॥२७॥

[बृहत्सं. ३३७-८, ३४०-१]

'भिन्ने' त्यादिगाथाचतुष्कम्, विकलेन्द्रियाणां–द्वित्रिचतुरिन्द्रियाणां सम्मूर्छिमाणां च–असंज्ञि-[3]पञ्चेन्द्रियाणां तिरश्चां प्रत्येकं भिन्नः–खण्डो मुहूर्त्तोऽन्तर्मुहूर्तमित्यर्थः, उत्कृष्ट उपपातविरहकालः । तथा 'गब्भे' त्ति गर्भजपञ्चेन्द्रियतिरश्चामुत्कृष्ट उपपातविरहकालो द्वादश मुहूर्ताः । [4]जघन्यः पुनः सर्वेष्वपि विकलेन्द्रियादिषूपपातविरहकाल एकसमयः ॥२४॥

विकलेन्द्रियाणां सम्मूर्छजानां गर्भव्युत्क्रान्तानां च पञ्चेन्द्रियतिरश्चां [5]एवं उपपातविरहकालसमतया

१ यति–वि. । अंति–सि. ॥ २ सुरवर० मु. ॥ ३ पञ्चेन्द्रियाणां पञ्चेन्द्रियतिरश्चां-सि. वि. ॥ ४ जघन्यतः–मु. ॥
५ एवं- मु. नास्ति ॥

उद्वर्तनापि–उद्वर्तनाविरहकालोऽपि वक्तव्यः । तथा एतेषामेव द्वीन्द्रियादीनामेकेन समयेन–एकस्मिन् समये उपपाते उद्वर्तनायां च सङ्ख्या सुरवरैस्तुल्या भणनीया । सा चैवं—

'एगो व दो व तिन्नि व संखमसंखा य एगममएणं । उववज्जन्तेवइया उव्वट्टंतावि एमेव ॥१॥

[बृहत्सं. गा. १५६]

तथा नरास्तिर्यञ्चश्च सङ्ख्यातवर्षायुषः सर्वेष्वपि स्थानेषु यान्ति । चतसृष्वपि गतिषूत्पद्यन्ते इति भावः । 'सुरनारया गब्भे' त्ति सूत्रस्य सूचामात्रपरत्वात् सुरा नारकाश्च गर्भजपर्याप्तसङ्ख्यातवर्षायुष्कतिर्यङ्मनुष्येषु गच्छन्ति, नान्यत्र । नवरं सुरा एकेन्द्रियेष्वपि । उक्तं च—

'बायरपज्जत्तेसुं सुराण भूदगवणेसु उप्पत्ती । ईसाणंताणं चिय तत्थवि न उ उड्ढगाणंपि ॥१॥' ॥२५॥

उक्तस्तिरश्चामुपपात-च्यवनयोर्विरहकाल एकसमयसङ्ख्या च प्रसङ्गतः सामान्येन गतिद्वारं च, अथ मनुष्याणामेतदेवाह–'बारसे' त्यादि गाथाद्वयम्, गर्भजेषु मनुष्येषु उत्कर्षत उपपातविरहकालो द्वादश मुहूर्ताः; संमूच्छिम[१]मनुजेषु चतुर्विंशतिमुहूर्ताः । जघन्यतस्तूभयत्राप्येकः समयः ॥२६॥

तथा उद्वर्त्तनापि-उद्वर्त्तनाविरहकालोऽप्येवमेव–उपपातविरहकालवद्वेदितव्यः । सङ्ख्या पुनरेकस्मिन् समये उत्पद्यमानानामुद्वर्तमानानां च नराणां सुरवरैस्तुल्या । सा चैवम्—

[२]'एगो व दो व तिन्नि व संखमसंखा उ एगसमएणं । उववज्जंतेवइया उव्वट्टंतावि एमेव । १॥'

[बृहत्सं. गा. १५६] इति ।

---

१ मनुष्येषु–मु. ॥ २ एक्को-ख. । एको-सि. ॥

नवरमसङ्ख्यातत्वं सामान्यतो गर्भजसम्मूर्छिमसङ्ग्रहापेक्षया द्रष्टव्यम् , तथा असङ्ख्यातवर्षायुषो नरतिरश्चः उपलक्षणत्वात् सप्तमपृथिवीनारकतेजोवायूंश्च मुक्त्वा शेषाः सर्वेऽपि सुरनरतिर्यङ्नारका मनुष्येषूत्पद्यन्त इति ॥२७॥११२-११३॥

सम्प्रति 'भवणवइ-वाणमन्तर-जोइसिय-विमाणवासिदेवाण ठिइ' त्ति चतुर्नवत्यधिकशततमं द्वारमाह—

भवणवइवाणमंतरजोइसियविमाण[1]वासिणो देवा ।
दस १ अट्ठ २ पंच ३ छव्वीस ४ संखजुत्ता कमेण इमे ॥२८॥
असुरा १ नागा २ विज्जू ३ सुवन्न ४ अग्गी ५ य वाउ ६ थणिया ७ य ।
उदही ८ दीव ९ दिसाविय १० दस भेया भवणवासीणं ॥२९॥
पिसाय १ भूया २ जक्खा ३ य रक्खसा ४ किन्नरा ५ य किंपुरिसा ६ ।
महोरगा ७ य गंधव्वा ८ अट्ठविहा वाणमंतरिया ॥३०॥ [बृहत्सङ्ग्रहणी गा. ४२,५८]
अणपन्निय १ पणपन्निय २ इसिवाइय ३ भूयवाइए ४ चेव ।
कंदिय ५ तह महकंदिय ६ कोहंडे ७ चेव पयगे ८ य ॥३१॥ [प्रज्ञापना सू. १९४/१५१]
इय पढमजोयणसए रयणाए अट्ठ वंतरा [2]अवरे ।
तेसु इह सोलसिंदा रुयगअहो दाहिणुत्तरओ ॥३२॥ [बृहत्सं. चन्द्र.४०-१]

॥३३३॥

१ ०वासिदेवाणं-खि. । ०वासिदेवाण-सि. ॥ २ एए- ता. ॥

चंदा १ सूरा २ य गहा ३ नक्खत्ता ४ तारया ५ य पंच इमे ।
एगे चलजोइसिया घंटायारा थिरा अवरे ॥३३॥
सोहंमी १ साण २ सणंकुमार ३ माहिंद ४ बंभलोयभिहा ५ ।
लंतय ६ सुक्क ७ सहस्सार ८ आणय ९ प्पाणया १० कप्पा ॥३४॥ [तुला-जीवसमास गा.१९-२०]
तह आरण ११ [1]ऽच्चुया १२ विहु इणिंह गेविज्जवरविमाणाइं ।
पढमं सुदरिसणं १३ [2]तह [3]बिईयं सुप्पबुद्धंति १४ ॥३५॥
तइय मणोरमं १५ तह विसालनामं १६ च सव्वओभद्दं १७ ।
सोमणसं १८ सोमाणस १९ महपीइकरं च २० आइच्चं २१ ॥३६॥
[4]विजयं च २२ वेजयंतं २३ जयंत २४ मपराजियं २५ च सव्वट्ठं २६ ।
एयमणुत्तरपणगं एएसिं चउव्विहसुराणं ॥३७॥
चमरबलि सारमहियं सेसाण सुराण आउयं वोच्छं ।
दाहिणदिवड्ढपलियं दो देसूणुत्तरिल्लाणं ॥३८॥
अद्धुट्ठ अद्धपंचमपलिओवम[5] असुरजुयलदेवीणं ।
सेसवणदेवयाण य देसूणद्धपलियमुक्कोसं ॥३९॥

---

१ भच्चुया-मु ॥ २ तस्स-ता. सि. ॥ ३ बिइयं-सि. वि. ॥ ४ विजयंतं-सि.वि. ॥ ५ ०वम-सि. वि. नास्ति ॥

दस भवणवणयराणं वाससहस्सा ठिई जहण्णेणं ।
[1]पलिओवममुक्कोसं वंतरियाणं वियाणिज्जा ॥४०॥ [ बृहत्सङ्ग्रहणी गा. ५, ६, ४ ]
पलियं सवरिसलक्खं ससीण पलियं रवीण [2]ससहस्सं ।
गहणक्खत्ततारण पलियमद्धं च[3] चउब्भागो ॥४१॥
तद्देवीणवि तट्ठिइअद्धं अहियं तमंतदेविदुगे ।
पाओ जहन्नमट्ठसु तारयताराणमट्ठंसो ॥४२॥
दो साहि सत्त [4]साहिय दस चउदस सत्तरेव अयराइं ।
सोहम्मा जा सुक्को तदुवरि एक्केक्कमारोवे ॥४३॥ [ बृहत्संग्र. गा. १२ ]
तेत्तीसऽयरुक्कोसा विजयाइसु ठिइ जहन्न इगतीसं ।
अजहन्नमणुक्कोसा सव्वट्ठे अयर तेत्तीसं ॥४४॥
पलि यंअहियं [5]सोहंमीसाणेसु तओऽहकप्पठिई ।
उवरिल्लमिजहन्ना कमेण जावेक्कतीसऽयरा ॥४५॥
सपरिग्गहेयराणं सोहंमीसाण पलियसाहीयं ।
उक्कोस सत्त [6]पन्ना नव पणपन्ना य देवीणं ॥४६॥ [ बृहत्सङ्ग्रहणी गा. १७ ]

१ पलिओमु० सि.वि. ॥ २ सयसहस्स–मु. ॥ ३ च–मु. नास्ति ॥ ४ साही-सि. ॥
५ दोसारसाहि सुहकप्पठिई–ता. ॥ ६ वन्ना–मु. । पन्ना-सि. वि. ॥

'भवणे' त्यादिगाथा एकोनविंशतिः, दीव्यन्तीति देवाः—प्राग्भवोपात्तपुण्यप्राग्भारोपनतविशिष्टभोगसुखाः प्राणिविशेषाः । ते च मूलभेदतस्तावच्चतुर्विधाः । तद्यथा—भवनपतयो व्यन्तरा ज्योतिष्का विमानवासिनश्च । तत्र भवनानां पतयः—तन्निवासित्वात्स्वामिनो भवनपतयः । तन्निवासित्वं च बाहुल्यतो नागकुमाराद्यपेक्षया द्रष्टव्यम् । ते हि प्रायो भवनेषु वसन्ति कदाचिदावासेषु । असुरकुमारास्तु प्राचुर्येणावासेषु कदाचिद्भवनेषु । भवनानामावासानां चायं विशेषः—भवनानि बहिर्वृत्तान्यन्तः समचतुरस्राणि अधःकर्णिकासंस्थानानि । आवासास्तु कायमानस्थानीया महामण्डपा विचित्रमणिरत्नप्रभाभासितसकलदिक्चक्रा इति ।

[1]तथा विविधमन्तरं—शैलान्तरं कन्दरान्तरं वनान्तरं वा आश्रयरूपं येषां ते [2]वनान्तराः । यद्वा विगतमन्तरं विशेषो मनुष्येभ्यो येषां ते व्यन्तराः, तथाहि मनुष्यानपि चक्रवर्ति-वासुदेवप्रभृतीन् भृत्यवदुपचरन्ति केचिद्व्यन्तरा इति मनुष्येभ्यो विगतान्तराः । प्राकृतत्वाच्च सूत्रे 'वाणमंतरा' इति पाठः । यद्वा 'वानमन्तरा' इति पदसंस्कारः । तत्रापि वनानामन्तराणि [3]वनान्तराणि तेषु भवा वानमन्तराः । पृषोदरादित्वादुभयपदान्तरालवर्ती मागमः । इदं तु व्युत्पत्तिनिमित्तं प्रवृत्तिनिमित्तं तु सर्वत्रापि जातिभेद एवानुसर्तव्यः ।

तथा द्योतयन्ति—प्रकाशयन्ति जगदिति ज्योतींषि—विमानानि तेषु भवा ज्योतिष्काः ।

तथा विविधं मान्यन्ते—उपभुज्यन्ते पुण्यवद्भिर्जीवैरिति विमानानि, तेषु वसन्तीत्येवंशीला विमानवासिनः

एते च भवनपत्यादयो देवाः 'क्रमेण' यथासङ्ख्यं दशाष्टपञ्चषड्विंशतिसङ्ख्यैर्भेदैर्युक्ता भवन्ति ॥२८॥

सम्प्रत्येतानेव क्रमेण भेदानभिधित्सुः प्रथमं तावद्भवनपतिभेदानाह—'असुरे'त्यादि, भवन-

१ तुला-बृहत्सङ्ग्रहणीमलय. वृत्तिः प. ४ ॥ २ व्यन्तरा.-खं. बृहत्सं. मलय. वृत्तौ च ॥ ३ वनान्तराणि-खं. नास्ति ॥

वासिनां अवान्तरजातिभेदमधिकृत्य दश भेदा भवन्ति । तद्यथा—'असुरा' इति पदैकदेशे पदसमुदायोपचारादसुरकुमाराः । एवं नागकुमारा इत्याद्यपि [1]भावनीयम् । अथ कस्मादेते कुमारा इति व्यपदिश्यन्ते ?, उच्यते, कुमारवच्चेष्टनात् । तथाहि—सर्व एवैते कुमारा इव शृङ्गाराभिप्रायकृत[2]विशिष्टविशिष्टतरोत्तररूपक्रियासमुद्धतरूपवेषभाषाभरणप्रहरणावरणयानवाहना अत्युल्बणरागाः क्रीडनपराश्च । ततः कुमारा इव कुमारा इति । [3]गाथानुबन्धानुलोम्यादिकारणाच्च कुतश्चिदेते एवं पठिताः । प्रज्ञापनादौ त्वमुनैव क्रमेण पठ्यन्ते, तथाहि—

"असुरा नाग सुवन्ना विज्जू अग्गी य दीव उदही य ।
दिसिपवणथणियनामा दसहा एए भवणवासी ॥ १ ॥ [पद २ सूत्र १७७ गा. १३७] ॥ २९ ॥

व्यन्तरभेदानाह—'पिसाये' त्यादि, सुगमा ॥ ३० ॥

इहापरेऽप्यष्टौ व्यन्तरभेदाः सन्तीत्यतस्तानप्याह—'अणे' त्यादिगाथाद्वयम् , अप्रज्ञप्तिकाः, पञ्चप्रज्ञप्तिकाः, ऋषिवादिताः, भूतवादिताः, क्रन्दिताः, महाक्रन्दिताः, कूष्माण्डाः [4]पतगाश्चेत्येवमपरे-पिशाचादिव्यतिरिक्ता अष्टौ व्यन्तरनिकायाः रत्नप्रभायाः पृथिव्याः प्रथमे—उपरितने योजनशते भवन्ति ।

एतदुक्तं भवति—रत्नप्रभाया उपरितने रत्नकाण्डरूपे योजनसहस्रे अध उपरि च प्रत्येकं योजनशतरहिते पिशाचादयोऽष्टौ व्यन्तरनिकायाः सन्ति । तत्र च यदुपरि योजनशतं मुक्तं तत्राध उपरि च दशयोजनरहितेऽप्रज्ञप्तिकादयोऽष्टाविति । तेषु च—[5]अप्रज्ञप्तिकादिष्वष्टसु व्यन्तरनिकायेषु रुचकस्याधस्ता-

१ परिभावनीयं-मु. । खं. वि. सि. परि० नास्ति ॥ २ ०विशिष्टोत्तरोत्तर. मु. । ० विशिष्टविशिष्टतरोत्तर० खं. ॥
३ गाथा बन्धा० खं. ॥ ४ पतङ्गा० मु. ॥ ५ अप्रज्ञप्तादि० खं. ॥

दक्षिणत उत्तरतश्च द्वयोर्द्वयोरिन्द्रयोर्भावात् षोडश इन्द्रा भवन्ति । एवं पिशाचादिष्वप्यष्टसु षोडश, भवनपतिषु च दशसु विंशतिः । अत एव विंशतिर्भवनपतीन्द्राणाम् , द्वात्रिंशतो व्यन्तरेन्द्राणाम् , असङ्ख्यातत्वेऽपि चन्द्रार्काणां जातिमात्राश्रयणाद् द्वयोश्चन्द्रसूर्ययोर्ज्योतिष्केन्द्रयोः दशानां च सौधर्मादिकल्पेन्द्राणां मीलने चतुःषष्टिरिन्द्रा इति ॥३१-३२॥

**ज्योतिष्कभेदानाह**--'चंदे' त्यादि, चन्द्राः, सूर्याः, ग्रहाः, नक्षत्राणि, तारकाश्चेत्येवं[1] पञ्च ज्योतिष्कभेदा भवन्ति । तत्र चैके-मनुष्यक्षेत्रवर्तिनो ज्योतिष्काश्चला-मेरोः प्रादक्षिण्येन सर्वकालं भ्रमणशीलाः, अपरे पुनर्ये मानुषोत्तरपर्वतात्परेण स्वयंभूरमणसमुद्रं यावद्वर्तन्ते ते सर्वेऽपि स्थिराः-सदावस्थानस्वभावाः । अत एव घण्टाकारा अचलनधर्मकत्वेन घण्टावत् स्थानस्था एव तिष्ठन्तीत्यर्थः ॥३३॥

**वैमानिकभेदानाह-'सोहंमो'** त्यादिगाथा[2]चतुष्कम् , इह वैमानिका द्विविधाः-कल्पोपपन्नाः कल्पातीताश्च । तत्र कल्पः-आचारः, स चात्र इन्द्र-सामानिक-त्रायस्त्रिंशादिव्यवस्थारूपः, तं प्रतिपन्नाः कल्पोपपन्नाः । ते च द्वादश । तद्यथा-सौधर्मदेवलोकनिवासिनः सौधर्माः, ईशानदेवलोकनिवासिन ईशानाः, एवं सर्वत्रापि भावनीयम् , भवति च 'तात्स्थ्यात्तद्व्यपदेशो' यथा पञ्चालदेशनिवासिनः [3]पञ्चाला इति ।

यथोक्तरूपं कल्पमतीताः-अतिक्रान्ताः कल्पातीताः-ग्रैवेयका अनुत्तरविमानवासिनः । सर्वेषामपि तेषामहमिन्द्रत्वात् । तत्र लोकपुरुषस्य ग्रीवाप्रदेशे भवानि विमानानि ग्रैवेयकानि । तानि च नव । तद्यथा-

१ ०ते-खं. ॥ २ ०चतुष्टयं-खं. ॥ ३ पाञ्चाला मु· । पञ्चाला- खं. वि सि. ॥

सुदर्शनम् १, सुप्रबुद्धम् २, मनोरमम् ३, विशालम् ४, सर्वतोभद्रम् ५, सुमनः ६, सौमनसम् ७, प्रीतिकरम् ८, आदित्यम् ९, चेति ।

तथा न विद्यन्ते उत्तराणि-प्रधानानि [1]विमानानि येभ्यस्तान्यनुत्तराणि; तानि च पञ्च । तद्यथा—विजयम्, वैजयन्तम्, जयन्तम्, अपराजितम्, सर्वार्थसिद्धं च । एतन्निवासिनो देवा एतन्नामानो द्रष्टव्याः । मिलिताश्च वैमानिकाः षड्विंशतिः ।

एतेषां मूलभेदापेक्षया चतुर्विधानां भवनपत्यादिदेवानां 'ठिइ' त्ति स्थितिरायुष्कलक्षणा प्रतिपाद्यते ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

तामेवाह—[2]'चमरे' त्यादि, इहासुरकुमारादयो दश भवनपतिनिकायाः । [3]एकैके च द्विधा—मेरोर्दक्षिणदिग्भागवर्तिनो मेरोरेवोत्तरदिग्भागवर्तिनश्च । तत्रासुरकुमाराणां दक्षिणदिग्भाविनामिन्द्रश्चमरः; उत्तरदिग्भाविनां च बलिः । तत्र 'चमर-बलि सारमहियं' ति पदैकदेशेऽपि पदसमुदायोपचारात् 'सार' मिति सागरोपमं द्रष्टव्यम्, प्राकृतत्वाच्चमर-बलिशब्दाभ्यां परतः षष्ठीविभक्तेर्लोपः । ततोऽयमर्थः—चमर-बल्योः क्रमेण सागरोपममधिकं चोत्कृष्टमायुः । किमुक्तं भवति ?—चमरस्यासुरेन्द्रस्य दक्षिणदिग्वर्तिन उत्कृष्टमायुरेकं परिपूर्णं सागरोपमम्, बलेरसुरेन्द्रस्य उत्तरदिग्वर्तिनः सागरोपमं किञ्चित्समधिकमिति ।

१ विमानानि-सि.वि. नास्ति ॥ २ 'चरम' गाहा-खं. ॥ पश्चमेऽपि 'चमर' स्थाने 'चरम' इति खं. प्रतौ ॥
३ तुला—बृहत्सं. मलय. वृत्तिः प. ६ A ॥

सम्प्रति शेषाणां चमर-बलिव्यतिरिक्तानां सुराणां–देवानां नागकुमाराद्यधिपतीनामित्यर्थः आयुर्वक्ष्ये । तदेव कथयति— [1]'दाहिणदिवड्ढपलियं दो देसूणुत्तरिल्लाणं' इत्यादि, दाक्षिणात्यानां नागकुमाराद्यधिपतीनां–धरणप्रमुखानां नवानामिन्द्राणामुत्कृष्टमायुः द्वितीयमर्धं यस्य तद् द्व्यर्धं पल्योपमम् सार्धं पल्योपममित्यर्थः । 'उत्तरिल्लाणं' ति [2]उत्तराहाणाम्–उत्तरदिग्भाविनां नागकुमारादीन्द्राणां भूतानन्दप्रभृतीनां नवानां देशोने–किञ्चिदूने द्वे पल्योपमे । उत्तरदिग्वर्तिनो ह्येते स्वभावादेव शुभाश्चिरायुषश्च भवन्ति । दक्षिणदिग्वर्तिनस्तु तद्विपरीता इति ॥ ३८ ॥

[3]इत्युक्तं भवनवासिनां देवानामुत्कृष्टमायुः; सम्प्रति भवनवासिव्यन्तरदेवीनामाह–'अड्ढुट्ठे' त्यादि, [4]असुरयोः–असुरेन्द्रयोश्चमरबलिनाम्नोर्युगलं असुरयुगलम् , तस्य देवीनां यथाक्रममुत्कृष्टमायुरर्धचतुर्थानि अर्धपञ्चमानि च पल्योपमानि । चमरेन्द्रदेवीनां सार्धानि त्रीणि, बलीन्द्रदेवीनां तु सार्धानि चत्वारि पल्योपमानीत्यर्थः । शेषाणां नागकुमाराद्यधिपतीनां तूत्तरदिग्वर्तिनां तथा 'वण' त्ति वनचराणां–[5]व्यन्तराणामुत्तरदक्षिणदिग्वर्तिनां चशब्दात् दक्षिणदिग्भाविनागकुमाराद्यधिपतीनां च सम्बन्धिनीनां [6]देवीनां यथाक्रममुत्कृष्टमायुर्देशोनं पल्योपममर्धपल्योपमं च ।

१ दाहिणेत्यादि खं. बृ. सं. वृत्तौ च ॥ २ औत्त० खं । उत्तराहीनां—इति बृ. सं. वृत्तौ ॥ ३ उक्तं च- खं. ॥ ४ तुला-बृहत्सङ्ग्रहणीवृत्तिः प. ६ B तः ॥ ५ व्यन्तराणामुत्कृष्टमायुर्देशोनं पल्योपमं दक्षिण० खं. ॥ ६ देवीनां चोत्कृष्टमायुर्धपल्योपमं च-खं. ॥

इयमत्र भावना—उत्तरदिग्भाविनागकुमाराद्यधिपतिदेवीनामुत्कृष्टमायुर्देशोनं पल्योपमम्, दक्षिणदिग्भाविनागकुमाराद्यधिपतिदेवीनां दक्षिणोत्तरदिग्भाविव्यन्तराधिपतिदेवीनां चोत्कृष्टमायुरर्धं पल्योपममिति । केचिद्व्यन्तरीणां पल्योपममुत्कृष्टमायुराहुः "श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितय" [ ] इति वचनश्रवणात् । तच्च तेषामागमानवगमविजृम्भितम्, यदुक्तं **प्रज्ञापनायाम्**—

"वाणमंतरीणं भंते ! केवइकालं ठिई पन्नत्ता ?, गोयमा ! जहन्नेणं दस वाससहस्साइं उक्कोसेणं अद्धपलिओवमं' [पद ४ सूत्र ३९४] इति, श्रीप्रभृतयस्तु भवनपतिदेव्यः । तथा च **सङ्ग्रहणीटीकायां हरिभद्रसूरिः**—"तासां भवनपतिनिकायान्तर्गतत्वादि" [ ] ति ॥ ३९ ॥

अथ **भवनपति**[1]**व्यन्तरदेवदेवीनां जघन्यां व्यन्तरदेवानामुत्कृष्टां च स्थितिमाह—'दसे'**त्यादि, सूचकत्वात्सूत्रस्य 'भवण' त्तिभवनपतिदेवानाम्, [2]उपलक्षणत्वात्तद्देवीनां च [3]वनचराणां—व्यन्तरदेवानां तद्देवीनां च जघन्येन स्थितिर्दश वर्षसहस्राणि । [4]जघनम्—अधस्तान्निकृष्टो भागः, तत्र भवं जघन्यं-रोममलादि तच्च किल स्तोकम्, ततोऽन्यदपि स्तोकं लक्षणया जघन्यमित्युच्यते । केवलं भावप्रधानत्वान्निर्देशस्य । जघन्येन—जघन्यतया सर्वस्तोकतयेत्यर्थः । तथा व्यन्तराणां—व्यन्तरदेवानामुत्कृष्टां[5] स्थितिं विजानीयात् [6]पल्योपमप्रमाणाम्, तद्देवीनां तु पल्योपमार्धमुत्कृष्टा स्थितिः प्रागेवोक्तेति ॥ ४० ॥

१ व्यन्तरदेवदेवानां-खं. । व्यन्तर देवानां-सि. ॥ २ उपलक्षणत्वात्तद्देवीनां च-खं. वि. नास्ति । उपलक्षणत्वात्-सि. नास्ति ॥ ३ व्यन्तराणां-सि० ॥ ४ जघन्यं खं. सि. ॥ ५ ०ष्ट-खं. ॥ ६ पल्योपमप्रमाणं-खं. ॥ पल्योपमं प्रमाणं-सि. ॥

सम्प्रति ज्योतिष्कदेवदेवीनामुत्कृष्टां जघन्यां च स्थितिमाह—'पलिये' त्यादिगाथाद्वयम्, ज्योतिष्कदेवास्तावच्चन्द्रा-ऽऽदित्य-ग्रह-नक्षत्र-तारकभेदात्पञ्चविधाः, तद्देव्योऽपि पञ्चविधा इति सर्वेऽपि दशविधाः। तत्र शशिनाम्—असङ्ख्येयद्वीपसमुद्रवर्तिचन्द्रविमानवासिदेवानां सवर्षलक्षं—वर्षाणां लक्षेणाधिकं पल्योपममुत्कृष्टमायुः। एवं रवीणाम्—आदित्यानामशेषाणां ससहस्रं—वर्षाणां सहस्रेणाधिकं पल्योपममुत्कृष्टमायुः। तथा ग्रह-नक्षत्र-ताराणां पल्योपमं पल्योपमार्धं पल्योपमचतुर्भागश्च यथाक्रममुत्कृष्टमायुः। इयमत्र भावना—ग्रहाणां—भौम-बुधादीनां परिपूर्णं पल्योपमम्; नक्षत्राणाम्—अश्विन्यादीनां पल्योपमार्धम्; तारकदेवानां च पल्योपमस्य चतुर्थो भाग उत्कृष्टमायुरिति।

तथा तेषां—चन्द्रा-ऽऽदित्य-ग्रह-नक्षत्र तारकदेवानां सम्बन्धिन्याः स्थितेरर्धं—समप्रतिभागरूपं तेषामेव सम्बन्धिनीनां देवीनां क्रमेणोत्कृष्टमायुः। [1]केवलमन्त्यदेवीद्विके—नक्षत्र-तारकदेवीद्वये तदेवार्धमधिकं—विशेषाधिकमवसेयम्, इदमुक्तं भवति—चन्द्रविमानवासिनीनां देवीनां पल्योपमार्धं पञ्चाशद्वर्षसहस्राधिकम्, सूर्यदेवीनां पल्योपमार्धं पञ्चवर्षशताधिकम्, ग्रहदेवीनां च पूर्णं पल्योपमार्धमुत्कृष्टमायुः। तथा नक्षत्रदेवीनां पल्योपमस्य चतुर्थो भागो विशेषाधिकमुत्कृष्टमायुः। तारकदेवीनां पल्योपमस्याष्टमो भागः किञ्चिदधिकमुत्कृष्टमायुरिति। तथा तारकदेवदेव्योः पृथगभिधानात् शेषेष्वष्टसु—चन्द्रादित्यग्रहनक्षत्रदेवतद्देवीरूपेषु भेदेषु पादः—पल्योपमस्य चतुर्थो भागो जघन्यमायुः तथा तारकदेवानां तारकदेवीनां च पल्योपमस्याष्टांशः अष्टमो भाग इति ॥४१॥ ४२॥ ॥३४२॥

१ केवलमन्तदेवी० खं. ॥

अथ वैमानिकदेवानामुत्कृष्टां स्थितिमाह—**'दो साही'** त्यादि 'सौधर्मात्-सौधर्मकल्पाद्यावत् शुक्रो-महाशुक्रकल्पस्तावदनेन क्रमेणोत्कृष्टा स्थितिः प्रतिपत्तव्या । तथाहि-सौधर्मे कल्पे देवानामुत्कृष्टा स्थितिर्द्वे अतरे, [2]तरीतुमशक्यं प्रभूतकालतरणीयत्वादतरं सागरोपमम्, द्वे सागरोपमे इत्यर्थः । ईशाने ते एव द्वे सागरोपमे साधिके-किञ्चित्समधिके । सनत्कुमारे सप्त सागरोपमाणि । माहेन्द्रे तान्येव सप्त सागरोपमाणि साधिकानि । ब्रह्मलोके दश सागरोपमाणि । लान्तके चतुर्दश, महाशुक्रे सप्तदश ।

**'तदुवरि एक्केक्कमारोवे'** इति तस्य-महाशुक्रस्य कल्पस्योपरि सहस्रारादिषु प्रतिकल्पं प्रतिग्रैवेयकं च पूर्वस्मात् पूर्वस्मादधिकमेकैकं सागरोपमम् उत्कृष्टायुश्चिन्तायामारोपयेत् । तद्यथा—सहस्रारेऽष्टादश सागरोपमाण्युत्युत्कृष्टा स्थितिः । आनते एकोनविंशतिः, प्राणते विंशतिः आरणे एकविंशतिः, अच्युते द्वाविंशतिः, [3]अधस्तनाधस्तने ग्रैवेयके त्रयोविंशतिः, अधस्तनमध्यमे [4]चतुर्विंशतिः, अधस्तनोपरितने पञ्चविंशतिः; मध्यमाधस्तने षड्विंशतिः, मध्यममध्यमे सप्तविंशतिः, मध्यमोपरितनेऽष्टाविंशतिः; उपरितनाधस्तने एकोनत्रिंशत्; उपरितनमध्यमे त्रिंशत्; उपरितनोपरितनग्रैवेयके एकत्रिंशत्सागरोपमाण्युत्कृष्टा स्थितिः ॥४३॥

एकैकवृद्ध्या च एकत्रिंशतोऽनन्तरमनुत्तरेषु द्वात्रिंशदेव स्यात् अतस्तेषु पृथगाह—**'तेत्तीसे'** त्यादि, विजयादिषु—विजय-वैजयन्त-जयन्ता-ऽपराजितेषु चतुर्षु अनुत्तरविमानेषु त्रयस्त्रिंशदतराणि—सागरोपमा-

A १ तुला-बृहत्सङ्ग्रहणीवृत्तिः प. १२ ॥ २ द्वे सागरोपमे इत्यर्थः-तरी० जे. । सागरोपमे इत्यर्थः—तरी० सि. वि. ॥
३ अधस्तनाधस्तन० मु ॥ ४ च चतु० सि. वि. ॥

ण्युत्कृष्टा स्थितिः। जघन्या पुनरेतेषु विजयादिषु चतुर्षु एकत्रिंशत्सागरोपमाणि। तथा सर्वार्थसिद्धे त्रयस्त्रिंशत्सागरोपमाण्यजघन्योत्कृष्टा स्थितिरिति ॥४४॥

अथ **वैमानिकदेवानामेव जघन्यां स्थितिमाह–'पलिय'** मित्यादि, इह यथाक्रमं पदसम्बन्धात् सौधर्मे कल्पे एकं पल्योपमम्; ईशाने तदेव किञ्चित्समधिकं जघन्या स्थितिः। तत ऊर्ध्वं सनत्कुमारादिषु ग्रैवेयकानुत्तरविमानावसानेषु अधःकल्पस्थितिः–अधोवर्त्तिनः कल्पस्य [1]या उत्कृष्टा स्थितिः उपर्युपरिवर्त्तिनि सैव जघन्या स्थितिः। अनेन च क्रमेण तावत्प्रतिपत्तव्यं यावदेकत्रिंशदतराणि। तथाहि–यैव सौधर्मे सागरोपमद्वयरूपा उत्कृष्टा स्थितिः सैव तदुपरिवर्तिनि सनत्कुमारे जघन्या। यैव चेशाने सातिरेक-सागरोपमद्वयस्वरूपा उत्कृष्टा स्थितिः सैव तदुपरिवर्तिनि माहेन्द्रे जघन्या। सनत्कुमारोत्कृष्टस्थितिस्तु सागरोपमसप्तकलक्षणा तदुपरिवर्तिनि ब्रह्मलोके जघन्या। तथा चोक्तं **प्रज्ञापनायाम्**—

"बंभलोए कप्पे देवाणं केवइयकालं ठिई पन्नत्ता?

गोयमा! जहन्नेणं सत्त सागरोवमाइं" [पद ४ सू. ४१९] ति।

तत्त्वार्थभाष्ये तु–"या माहेन्द्रे परा स्थितिर्विशेषाधिकानि सप्त सागरोपमाणि सा ब्रह्मलोके जघन्या भवती" [ ] त्युक्तम्।

ब्रह्मलोकोत्कृष्टस्थितिस्तु दशसागरोपमात्मिका लान्तके जघन्या। लान्तकोत्कृष्टस्थितिरपि चतुर्दश सागरोपमरूपा महाशुक्रे जघन्या। तदुत्कृष्टस्थितिस्तु सप्तदशसागरोपमस्वरूपा सहस्रारे जघन्या।

१ वा-मु ॥

तदुत्कृष्टस्थितिः पुनरष्टादशसागरोपमलक्षणा आनते जघन्या । तदुत्कृष्टस्थितिस्त्वेकोनविंशतिसागरोपमस्वरूपा प्राणते जघन्या । तदुत्कृष्टस्थितिरपि विंशतिसागरोपमात्मिका आरणे जघन्या । तदुत्कृष्टस्थितिस्त्वेकविंशतिसागरोपमस्वरूपा अच्युते जघन्या । तदुत्कृष्टस्थितिस्तु द्वाविंशतिसागरोपमरूपा [1]अधस्तनाधस्तनग्रैवेयके जघन्या । एवमेकैकं सागरोपमं वर्धयता तावन्नेयं यावदनुत्तरचतुष्के–विजय-वैजयन्त-जयन्ता-ऽपराजितरूपे एकत्रिंशत्सागरोपमाणि जघन्या स्थितिः । सर्वार्थसिद्धे पुनर्जघन्या स्थितिर्नास्ति । अजघन्योत्कृष्टायास्त्रयस्त्रिंशत्सागरोपमरूपाया एव स्थितेस्तत्राभिधानादिति ॥ ४५ ॥

सम्प्रति **वैमानिकदेवीनां जघन्यामुत्कृष्टां च स्थितिमाह—'सपरी'** त्यादि, [2]इह वैमानिकदेवीनामुत्पत्तिः सौधर्मेशानयोरेव, ताश्च द्विधा परिगृहीताः–कुलाङ्गना इव, अपरिगृहीताश्च–वेश्या इव । तत्र सपरिग्रहाणां–परिगृहीतानामितरासां च–अपरिगृहीतानां जघन्या स्थितिः सौधर्मे ईशाने च यथासङ्ख्यं पल्यं–पल्योपमम्, साधिकं च । किमुक्तं भवति ?–सौधर्मे परिगृहीतानां देवीनामपरिगृहीतानां च देवीनां जघन्यायुः पल्योपमम् । ईशाने परिगृहीतानामपरिगृहीतानां च देवीनां साधिकं पल्योपममिति ।

तथा सौधर्मे परिगृहीतानामपरिगृहीतानां ( ग्रन्थाग्रं १४००० ) चोत्कृष्टमायुर्यथाक्रमं सप्त, पञ्चाशच्च पल्योपमानि, इशाने नव, पञ्चपञ्चाशच्च । इयमत्र भावना--सौधर्मे परिगृहीतानामुत्कृष्टमायुः सप्त पल्योपमानि, अपरिगृहीतानां पञ्चाशत् ईशाने परिगृहीतानामुत्कृष्टमायुर्नव पल्योपमानि; अपरिगृहीतानां च पञ्चपञ्चाशदिति ॥ ४६ ॥ १६४॥

१ अधस्तनग्रैवे० सि. वि. ॥ २ तुला-बृहत्सङ्ग्रहणीवृत्तिः प. १४ B तः ॥

सम्प्रति 'भवण' त्ति पञ्चनवत्यधिकशततमं द्वारमाह—

१९५ द्वारे भवनपत्यादीनां भवननानि गाथा ११४७-५४

सत्तेव य कोडीओ हवंति बावत्तरी सयसहस्सा ।
एसो भवणसमासो भवणवईणं वियाणिज्जा ॥४७॥
चउसट्ठी असुराणं नागकुमाराण होइ चुलसीई ।
बावत्तरि कणगाणं वाउकुमाराण छन्नउई ॥४८॥
दीवदिसाउदहीणं विज्जुकुमारिंदथणियअग्गीणं ।
छण्हंपि जुयलाणं [1]छावत्तरिमो सयसहस्सा ॥४९॥ [ बृहत्सङ्ग्रहणी गा. ३५-७ ]
[2]इह संति वणयराणं रम्मा [3]भोमनयरा असंखिज्जा ।
तत्तो संखिज्जगुणा जोइसियाणं विमाणाओ ॥५०॥ [तुला-बृहत्सङ्ग्रहणी गा. ५५]
बत्तीसऽट्ठावीसा बारस अट्ठ [4]य चउरो सयसहस्सा ।
आरेण बंभलोया विमाणसंखा भवे एसा ॥५१॥
पंचास चत्त छच्चेव सहस्सा लंत सुक्क सहस्सारे ।
सय चउरो आणयपाणएसु [5]तिन्नारणच्चुयए ॥५२॥

प्र. आ. ३३६

१ बाव० मु. । प्रज्ञापनासूत्रे बृहत्सङ्ग्रहण्यामपि—छाव० इति पाठः ॥ २ इय-सि. ॥ ३ भोमानयरा—ता. ॥ ४ य-ता. नास्ति ॥ ५ वहारणच्चुए-ता. ॥

एक्कारसुत्तरं हेट्ठिमेसु सत्तुत्तरं च मज्झिमए ।
सयमेगं उवरिमए । पंचेव अणुत्तरविमाणा ॥९३॥
चुलसीई सयसहस्सा सत्ताणउई भवे सहस्साइं ।
तेवीसं च विमाणा विमाणसंखा [1]भवे एसा ॥५४॥ [ बृहत्सङ्ग्रहणी ११७-२० ]

'सत्तेव य' गाहा, भवनवासिनां देवानां दशस्वपि निकायेषु सम्पिण्डय चिन्त्यमानानि सर्वाण्यपि भवनानि सप्त कोटयो द्वासप्ततिश्च शतसहस्राणि-लक्षाः [2]भवन्ति ७७२००००। एष भवनपतीनां भवन-समासो भवनसर्वसङ्ख्या इति विजानीयात्। एतानि च [3]अशीतिसहस्राधिकलक्षयोजनबाहल्याया रत्नप्रभाया अध उपरि च प्रत्येकं योजनसहस्रमेकं [4]मुक्त्वा शेषेऽष्टसप्ततिसहस्राधिकलक्षयोजनमाने मध्यभागेऽवगन्त-व्यानि। अन्ये त्वाहुः- [5]नवतेर्योजनसहस्राणामधस्ताद्भवनानि। अन्यत्र चोपरितनमधस्तनं च योजनसहस्रं मुक्त्वा सर्वत्रापि यथासम्भवमावासा इति ॥४७॥

प्र. आ.
३३६

सम्प्रति भवनवासिनामेव प्रतिनिकायं भवनसङ्ख्यामाह-'चउ' इत्यादि, असुराणां- [6]असुरकुमाराणां दक्षिणोत्तरदिग्भाविनां सर्वसङ्ख्यया [7]भवनानि चतुःषष्टिः शतसहस्राणि-लक्षा भवन्ति [8]६४००००० । एवं नागकुमाराणां चतुरशीतिर्लक्षाः ८४०००००; कनकानां-सुवर्णकुमाराणां द्विसप्ततिर्लक्षाः ७२०००००;

१ मुणेयव्वा-ता.॥ २ भवन्ति-जे. नास्ति ॥ ३ तुला-बृहत्सग्रहणी मलय वृत्तिः प. ९२ ॥ ४ मुक्त्वा सर्वत्रापि यथासम्भवमावासादिति योजनमाने-खं०। मुक्त्वासर्वत्रापि यथासम्भवमावासा इति-सि० वि०॥ ५ नवति योजन० खं. । नवयोजन० सि. वि.॥ ६ असुरकुमारादीनां-खं. वि.॥ ७ भवनानि-खं. नास्ति ॥ ८ अङ्कानि-मु. नास्ति। एवमग्रेऽपि ज्ञेयम् ॥

वायुकुमाराणां षण्णवतिलक्षाः ९६०००००; द्वीपकुमारदिक्कुमारोदधिकुमारविद्युत्कुमारस्तनितकुमाराग्नि-कुमाराणां षण्णामपि दक्षिणोत्तरदिग्वर्तिलक्षणयुग्मरूपाणां प्रत्येकं षट्सप्ततिः षट्सप्ततिर्लक्षा भवन्ति भवनानाम् ७६००००० । एषां च सर्वेषामप्येकत्र मीलने प्रागुक्ताः सङ्ख्या भवन्ति[1] ७७२०००००
॥४८॥४९॥

सम्प्रति **व्यन्तरनगरवक्तव्यतामाह**--'इहे'त्यादि, इह-तिर्यग्लोके रत्नप्रभायाः प्रथमे योजनसहस्रे रत्नकाण्डरूपे अध उपरि च प्रत्येकं योजनशतविरहिते वनचराणां-व्यन्तराणां रम्याणि-रमणीयानि, भूमौ भवानि भौमानि-भूम्यन्तर्वर्तीनि नगराण्यसङ्ख्यातानि सन्ति । रम्यता चैतेषु नित्यमुदितैर्व्यन्तरैर्गतस्यापि कालस्यावेदनात् । यदाह—

△"[2] तहिं देवा वंतरिया वरतरुणीगियवाइयरवेणं ।
निच्चं सुहिया पमुइया गयंपि कालं न याणंति ॥ १ ॥" [बृहत्सं. चन्द्र. गा. ३३]

यास्तु मनुष्यक्षेत्राद्बहिर्द्वीपेषु समुद्रेषु च व्यन्तराणां नगर्यस्ता **जीवाभिगमादिशास्त्रे**भ्योऽवसेयाः । तेभ्योऽपि व्यन्तरनगरेभ्यः सङ्ख्येयगुणानि ज्योतिष्काणां ज्योतिष्कदेवानां विमानानि ॥ ५० ॥

सम्प्रति **वैमानिकदेव[3]विमानसङ्ख्यामाह**--**'बत्तीसे'** त्यादि गाथाचतुष्कम्, [4]ब्रह्मलोकाद्- [5]ब्रह्मलोकपर्यन्तादारतः-अर्वाक्; किमुक्तं भवति ?-ब्रह्मलोकमभिव्याप्य एषा विमानसङ्ख्या

---

१ ०ति-जे खं. सि. वि. ॥ २ तेहिं-खं. सि. ॥
△ तत्र देवा व्यन्तरा वरतरुणीगीतवादित्ररवेण । नित्य सुखितप्रमुदिता गतमपि कालं न जानन्ति ॥१॥
३ विमानानां सङ्ख्या०-मु. ॥ ४ तुला-बृहत्सङ्ग्रहणीवृत्तिः प. ४७ ॥ ५ ब्रह्मलोकचरमपर्यन्ता० मु. ॥

भवति । तद्यथा—सौधर्मे कल्पे द्वात्रिंशद्विमानानां शतसहस्राणि ३२०००००, ईशानेऽष्टा विंशतिः २८०००००, सनत्कुमारे द्वादश १२०००००, माहेन्द्रेऽष्टौ८०००००; ब्रह्मलोके चत्वारि ४०००००॥५१॥

तथा—'पंचासे'त्यादि, अत्रापि पूर्वार्धे [1]कल्पक्रमेण सङ्ख्यापदयोजना । लान्तके पञ्चाशद्विमानानां सहस्राणि ५००००; महाशुक्रे चत्वारिंशत् ४००००; सहस्रारे षट् सहस्राः ६००० । तथा आनत-प्राणतयोर्द्वयोः समुदितयोश्चत्वारि विमानशतानि ४०० । तथा [2]आरणा-ऽच्युतयोर्द्वयोः समुदितयोस्त्रीणि विमानशतानि ३०० ॥५२॥

तथा—'एगारे' त्यादि, अधस्तनेषु त्रिषु ग्रैवेयकेषु समुदितेषु विमानानामेकादशोत्तरं शतम् ११० । मध्यमे ग्रैवेयकत्रिके समुदिते सप्तोत्तरं शतम् १०७ । उपरितनग्रैवेयकत्रिके समुदिते शतमेकम् १००, सर्वान्तिमप्रतरे तु विजयादीनि पञ्चैवानुत्तरविमानानि ५ ॥५३॥



अथ **विमानानां सर्वसङ्ख्यामाह**—'चुलसीई' त्यादि, [3]अनन्तरेण गाथात्रयेणाभिहितानां विमानानामेषा सर्वसङ्ख्या—चतुरशीतिः शतसहस्राणि सप्तनवतिः सहस्राणि त्रयोविंशतिश्च विमानानीति[4] ८४९७०२३ ॥५४॥१९५॥

सम्प्रति 'देहमाणं' ति पण्णवत्यधिकशततमं द्वारमाह—

**भवणवणजोइसोहम्मीसाणे सत्त हुंति रयणीओ ।**
**एक्केक्कहाणि सेसे दुदुगे य दुगे चउक्के य ॥५५॥**

१ कल्पे-ख.त्रि. ॥ २ तथा खं. त्रि. नास्ति ॥ ३ अनन्तर गाथात्रयाभि० मु. ॥ ४ ०ति ( ८४९७०२३ )-मु. ॥

गेविज्जेसुं दोन्नि 'य एगा रयणी अणुत्तरेसु भवे ।
भवधारणिज्ज एसा उक्कोसा होइ नायव्वा ॥५६॥
सव्वेसुक्कोसा जोयणाण वेउव्विया सयसहस्सं[2] ।
गेविज्जणुत्तरेसुं उत्तरवेउव्विया नत्थि ॥५७॥
अंगुलअसंखभागो जहन्न भवधारणिज्ज पारंभे ।
संखेज्जा अवगाहण उत्तरवेउव्विया सावि ॥५८॥ [बृहत्सङ्ग्रहणी १४३-४४, १४८, १५०]

'भवणे' त्यादिगाथाचतुष्टयम्, [3]भवनपति-व्यन्तर-ज्योतिष्कसौधर्मेशानेषु देवानामुत्सेधाङ्गुलेन देहमानमुत्कर्षतः सप्त रत्नयो-हस्ता भवन्ति । शेषे द्विके द्विके द्विके चतुष्के च एकैकहानिः-एकैकहस्तविषया हानिर्वक्तव्या । तद्यथा—सनत्कुमार-माहेन्द्रयोरुत्कर्षतः षट् हस्ताः शरीरप्रमाणम्; ब्रह्मलोक-लान्तकयोः पञ्च; शुक्र-सहस्रारयोश्चत्वारः; आनत-प्राणता-ऽऽरणा-ऽच्युतेषु त्रय इति । तथा ग्रैवेयकेषूत्कर्षतः शरीरप्रमाणं द्वौ रत्नी । एकश्च रत्निरनुत्तरेषु भवेत्, एषा च सप्तहस्तप्रमाणादिका उत्कृष्टावगाहना भवधारणीया वेदितव्या ॥ ५५ ॥ ५६ ॥



[4]साम्प्रतमुत्तरवैक्रियरूपावगाहनामानमाह—'सव्वेसु' इत्यादि, भवनपत्यादिषु अच्युतदेवलोकपर्यन्तेषु [5]सर्वेष्वपि देवानामुत्तरवैक्रिया तनुरुत्कर्षतो योजनानां [6]शतसहस्रं, योजनलक्षप्रमाणा भवती-



१ वि-ता. ॥ २ ०स्सा-ता. ॥ ३ तुला-बृहत्सङ्ग्रहणीवृत्तिः प. ६५ तः ॥ ४ तुला-बृहत्सङ्ग्रहणीवृत्तिः प.६९ ॥
५ सर्वेषामपि-मु. ॥ ६ द्रष्टव्या अनुयोगद्वारसूत्रवृत्तिः प. १६५ ॥

त्यर्थः । ग्रैवेयकेषु अनुत्तरेषु च देवानामुत्तरवैक्रिया तनुर्नास्ति । सत्यामपि शक्तौ प्रयोजनाभावतस्तद्-करणात् उत्तरवैक्रियं ह्यत्र गमनागमननिमित्तं [1]परिचारणानिमित्तं वा क्रियते, न चैतेषामेतदस्तीति ॥५७॥

सम्प्रति जघन्यतो भवधारणीयामुत्तरवैक्रियां चाह— 'अंगुले' त्यादि, सर्वेषामपि भवनपत्यादीनां भवधारणीया—स्वाभाविक्यवगाहना जघन्याङ्गुलस्यासङ्ख्येयो भागः । सा च प्रारम्भे [2]उत्पत्तिप्रथमसमये समवसेया । उत्तरवैक्रिया पुनरवगाहना जघन्याऽङ्गुलस्य सङ्ख्येयो भागः । पर्याप्तत्वेन [3]तस्य तथा-विधजीवप्रदेशसङ्कोचाभावात् । साऽपि प्रारम्भे उत्तरवैक्रियशरीरनिर्माणप्रथमसमये द्रष्टव्या ॥५८॥ १९६॥

साम्प्रतं 'लेसाउ' त्ति सप्तनवत्यधिकशततमं द्वारमाह—

किण्हा नीला काऊ तेऊलेसा य [4]भवणवंतरिया ।
जोइससोहम्मीसाण तेऊलेसा मुणेयव्वा ॥ ५९ ॥
कप्पे सणंकुमारे माहिंदे चेव बंभलोए य ।
एएसु पम्हलेसा तेण परं सुक्कलेसाओ ॥ ६० ॥

'किण्हा' इत्यादिगाथाद्वयम् , भवनपतयो व्यन्तराश्च कृष्ण-नील-कापोत-तेजोलेश्याकाः । कृष्णा नीला कापोती तैजसी चैषां लेश्या [5]भवन्तीत्यर्थः । तत्रापि परमाधार्मिकाः कृष्णलेश्याः । तथा ज्योति-ष्केषु सौधर्मेशानयोश्च देवास्तेजोलेश्याका ज्ञातव्याः । तथा [6]सनत्कुमार-माहेन्द्रब्रह्मलोकाख्येषु त्रिषु कल्पेषु

१ परिचराणा॰ खं. । परिवाराणा॰ सि. ॥ २ उत्पन्नप्र॰ जे. सि. ॥ ३ तस्य-सि.वि. नास्ति ॥
४ भवणवंतरया-सि. वि. ॥ ५ भवतीत्यर्थः-खं. सि. ॥ ६ द्रष्टव्या जीवसमासवृत्तिः ( प. ७३ ) ॥

देवाः पद्मलेश्याकाः । ततो—ब्रह्मलोकात्परम्—ऊर्ध्वं लान्तकादिषु अनुत्तरविमानान्तेषु देवाः शुक्ललेश्या ज्ञातव्याः । सर्वा अपि [1]च लेश्या यथोत्तरस्थानं विशुद्धविशुद्धतरा बोद्धव्याः ।

एताश्च भावलेश्या [2]हेतवोऽवस्थिता कृष्णादिद्रव्यरूपा द्रव्यलेश्या एवेह प्रतिपत्तव्याः, न भावलेश्याः तासामनवस्थितत्वात् । नापि बाह्यवर्णरूपाः बाह्यवर्णस्य देवानां प्रज्ञापनादौ पार्थक्येनोक्तत्वात् । एतच्च नारकलेश्याद्वारे प्रागेवोक्तम् । भावलेश्यास्तु देवानां प्रतिनिकायं यथासम्भवं षडपि भवन्ति । तथा च तत्त्वार्थमूलटीकायां हरिभद्रसूरिः—"भावलेश्याः षडपीष्यन्ते देवानां प्रतिनिकाय" [ ] मिति ॥५९॥६०॥११७॥

प्र. आ. ३३८

इदानीम् 'ओहिनाणं' त्यष्टनवत्यधिकशततमं द्वारमाह—

सक्कीसाणा पढमं दोच्चं च सणंकुमारमाहिंदा ।
तच्चं च बंभलंतग सुक्कसहस्सारय चउत्थि ॥६१॥
आणयपाणयकप्पे देवा पासंति पंचमीं पुढवीं ।
[3]तं चेव आरणच्चुय ओहिणाणेण पासंति ॥६२॥
छट्ठिं हिट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला ।
संभिन्नलोगनालिं पासंति अणुत्तरा देवा ॥६३॥

---

१ च-मु. नास्ति ॥ २ ०हेतवो भवस्थिताः-मु. ॥ ३ ते-ता. ॥

एएसिमसंखेज्जा तिरियं दीवा य सागरा चेव ।
बहुययरं उवरिमया उड्ढं च सकप्पथूभाई[1] ॥६४॥
संखेज्जजोयणाइं देवाणं अद्धसागरे ऊणे ।
तेण परमसंखेज्जा जहन्नयं पन्नवीसं तु ॥६५॥ [ बृहत्सङ्ग्रहणी २२०-४]
भवणवइवणयराणं उड्ढं बहुओ अहो य सेसाणं ।
[2]जोइसनेरइयाणं तिरियं ओरालिओ चित्तो ॥६६॥

'सक्को' त्यादिगाथाषट्कम्, [3]शक्रेशानौ—सौधर्मेशान[4]कल्पदेवेन्द्रौ, उपलक्षणमेतत् इन्द्रसामानिकादयश्चोत्कृष्टायुषः; एवमन्यत्राप्युपलक्षणव्याख्यानं द्रष्टव्यम्; प्रथमां—रत्नप्रभाख्यां पृथिवीं यावत्; रत्नप्रभायाः पृथिव्याः सर्वाधस्तनं भागं यावदुत्कृष्टतोऽवधिना पश्यतः। सनत्कुमार-माहेन्द्राविन्द्रौ द्वितीयां-शर्कराप्रभां पृथिवीं यावत्; शर्कराप्रभायाः पृथिव्या अधस्तनं सर्वान्तिमं चरमं भागं यावदित्यर्थः। एवमुत्तरत्रापि भावनीयम्। ब्रह्मलोक-लान्तकौ तृतीयां—वालुकाप्रभां यावत्। शुक्रसहस्रारौ चतुर्थीं पङ्कप्रभां यावत्। तथा आनत-प्राणतकल्पयोर्देवाः—इन्द्र-तत्सामानिकादयः पञ्चमीं पृथिवीं—धूमप्रभां यावदवधिना पश्यन्ति। आरणाच्युतदेवा अपि तामेव पञ्चमीं पृथ्वीं [5]यावत् पश्यन्ति, नवरम् आनत—प्राणतदेवेभ्य आरणाच्युतदेवास्तामेव विशुद्धतरां बहुपर्यायां च। तत्राप्यानतदेवेभ्यः प्राणतदेवाः, आरणदेवेभ्यश्चाच्युतदेवाः

१ ०ई-मु.॥ २ जोइसि० मु.॥ ३ तुला—बृहत्सङ्ग्रहणी वृत्तिः प. ८६ तः॥ ४ ०कल्पेन्द्रौ-मु.॥ ५ यावत् तथा आनत० मु.॥

सविशेषां पश्यन्ति । उत्तरोत्तरदेवानां विमल-विमलतरावधिज्ञानसद्भावात् । एवं प्रागुत्तरत्र च सर्वत्र भावनीयम् । तथा अधस्तनमध्यमग्रैवेयकाः 'आधेये आधारोपचारात्' तन्निवासिनो देवाः षष्ठीं—तमःप्रभां पृथिवीं यावत्पश्यन्ति । [1]उपरितना—उपरितनग्रैवेयकवासिनो देवाः सप्तमीं पृथिवीं यावत् । अनुत्तरविमानवासिनस्तु देवाः सम्भिन्नां परिपूर्णां लोकनाडीं—लोकमध्यवर्तिनीं त्रसनाडीमधस्तादवधिना पश्यन्ति । उक्तं च **तत्त्वार्थभाष्ये**—

"अनुत्तरविमानवासिनस्तु कृत्स्नां लोकनालिं[2] पश्यन्ती" [अ. ४. सू. २१] ति ।

अन्ये तु स्वविमानध्वजादूर्ध्वमदर्शनात् किञ्चिदूनां लोकनाडीं पश्यन्तीत्याहुः, तदेवमधस्तादवधिविषयभूतं क्षेत्रमुक्तम् ॥ ६१ ॥ ६२ ॥ ६३ ॥

प्र. आ. ३३८

सम्प्रति तदेव तिर्यगूर्ध्वं चाह—**'एएसि'** मित्यादि, एतेषां शक्रेशानादिदेवानां तिर्यक्—तिरश्चीनमवधिविषयं क्षेत्रमसङ्ख्येया द्वीपाः सागराश्च; असङ्ख्यातान् द्वीपानसङ्ख्यातांश्च समुद्रानवधिना तिर्यक्पश्यन्तीत्यर्थः । केवलमेतदेव द्वीपसमुद्रासङ्ख्येयकम् **'उवरिमया'**[3] इति उपर्युपरिवर्तिकल्पवासिनो देवा बहुकतरम्; उपलक्षणमेतत् बहुकतमं च तिर्यगवधिना पश्यन्ति । उपर्युपरिदेवलोकनिवासिनां विशुद्धविशुद्धतरावधिज्ञानसद्भावात् । [4]ऊर्ध्वं पुनः सर्वेऽपि शक्रादयो देवाः स्वकल्पस्तूपादीन्—स्वस्वविमानचूलाध्वजादिकं यावत्पश्यन्ति न परतः । तथाभवस्वाभाव्यात् ।

१ उपरितना-मु. नास्ति ॥ २ ०र्डीं-इति तत्त्वार्थभाष्ये पाठः ॥ ३ ०गा-खं. वि. ॥
४ तुला-बृहत्सङ्ग्रहणी देवभद्रीय वृत्तिः प. ७२ ॥

जघन्यतः पुनरमी सर्वेऽपि सौधर्मादयोऽनुत्तरविमान[1]वासिपर्यन्ता अङ्गुलासङ्ख्येयभागमात्रं क्षेत्रं पश्यन्ति । तथा **चावश्यकचूर्णिः**—

"वेमाणिया सोहम्माओ आरब्भ जाव सव्वट्ठसिद्धगा देवा ताव जहन्नेण अंगुलस्स असंखेज्जइभागं ओहिणा जाणंति पासंति ।" [भा. १ । प. ५३]

नन्वङ्गुलासङ्ख्येयभागमात्रक्षेत्रप्रमितोऽवधिः सर्वजघन्यो भवति । सर्वजघन्यश्चावधिस्तिर्यग्मनुष्येष्वेव न शेषेषु । यदुक्तम्—+'उक्कोसो मणुएसु मणुस्सतेरिच्छएसु य जहन्नो ।' [ ] । तत्कथमिह वैमानिकानां सर्वजघन्य उक्तः ?, उच्यते, सौधर्मादिदेवानां पारभविकोऽप्युपपातकालेऽवधिः सम्भवति । स च सर्वजघन्योऽपि कदाचिदवाप्यते । उपपातानन्तरं तु देवभवप्रत्ययजः । ततो न [2]कश्चिद्दोषः । यदाह **जिनभद्रगणिक्षमाश्रमणः**—

Δ"वेमाणियाणमंगुलभागमसंखं जहन्नओ होइ । उववाओ परभविओ तब्भवजो होइ तो पच्छा ॥ १ ॥'

पारभविकत्वाच्चायं सूत्रकृता नोक्त इति ॥६४॥

उक्तं वैमानिकानामधस्तिर्यगूर्ध्वं चावधिक्षेत्रम्, अथ सामान्यतः **शेषदेवानामाह**—'संखेज्जे' त्यादि, देवानां—भवनपति-व्यन्तर-ज्योतिष्काणामर्धसागरोपमप्रमाणे किञ्चिदूनायुषि सति संख्येयान्येव



+ उत्कृष्टो मनुष्येषु मनुष्यतिर्यक्षु च जघन्यः ॥

Δ वैमानिकानामङ्गुलासंख्यभागो जघन्यतो भवति । औपपातिकः (उपपाते) पारभविकः तद्भवजो भवति तत् पश्चात् ॥ १ ॥ १ वासिनः पर्यन्ता-सि. । वासिने पर्यन्ता-जे. ॥ २ कदाचिद्दोषः मु. ॥

योजनानि अवधिपरिच्छेद्यक्षेत्रम् । ततः परं संपूर्णार्धसागरोपमादिके आयुषि सति पुनः असङ्ख्येयानि योजनानि । केवलमायुर्वृद्ध्या योजनासङ्ख्यातकस्यापि वृद्धिर्वाच्या । जघन्यं [1]पुनरवधिक्षेत्रं पञ्चविंशतिर्योजनानि । तानि च येषां सर्वजघन्यं–दशवर्षसहस्रप्रमाणम् आयुस्तेषामेव भवनपतिव्यन्तराणां द्रष्टव्यानि न–शेषाणाम् । आह च भाष्यकृत्—

△ "पणवीसजोयणाइं दसवाससहस्सिया ठिई जेसि" [ ] मिति ।

ज्योतिष्काः पुनरसङ्ख्येयस्थितिकत्वाज्जघन्यतोऽपि सङ्ख्येययोजनप्रमितान् सङ्ख्येयान् द्वीपसमुद्रानवधिज्ञानतः पश्यन्ति । उत्कर्षतोऽपि तानेव । केवलमधिकतरान् । उक्तं च प्रज्ञापनायाम्— प्र. आ. ३३९

"जोइसिया णं भंते ! केवइयं खेत्तं ओहिणा जाणंति पासंति ?, गोयमा ! जहन्नेणवि संखेज्जे दीवसमुद्दे, उक्कोसेणवि संखेज्जे दीवसमुद्दे" [पद ३३, सू. ११९७] इति ॥ ६५ ॥

अथ नारकतिर्यङ्नरामराणां मध्ये कस्य कस्यां दिशि प्रभूतोऽवधिरिति प्रतिपादयन्नाह—

'भवणे' त्यादि, भवनपतीनां व्यन्तराणां चावधिरूर्ध्वं बहुकः–प्रभूतः । शेषासु च दिक्षु स्वल्पविषय एवावधिः । एवमग्रेऽपि भावनीयम् । शेषाणां तु वैमानिकदेवानां पुनरधः प्रभूतोऽवधिः, ज्योतिष्कनारकाणां तिर्यक्प्रभूतः ।



---

१ तु पुन० मु. ॥ △ पञ्चविंशतिर्योजनानि दशवर्षसाहस्रिका स्थितिर्येषाम् ॥

तथा तिर्यग्मनुष्याणां सम्बंध्यवधिरौदारिकावधिरुच्यते। अयं तु चित्रो–नानाप्रकारः, केषाञ्चिदूर्ध्वं बहुः, अन्येषां त्वधः, परेषां तु तिर्यक्, केषाञ्चित् तुल्य इति भावः ॥६६॥११६८॥

सम्प्रति 'उप्पत्तीए विरहो' त्ति नवनवत्यधिकशततमं द्वारमाह––

भवणवणजोइसोहंमीसाण चउवीसई[1] मुहुत्ता उ ।
उक्कोस विरहकालो सव्वेसु जहन्नओ समओ ॥६७॥
नव दिण वीस मुहुत्ता बारस दस चेव दिण मुहुत्ता उ ।
बावीसा अद्धं चिय पणयाल असीइ दिवससयं ॥६८॥
[2]संखिज्जा मासा [3]आणयपाणय तह आरणच्चुए वासा ।
संखेज्जा विन्नेया गेविज्जेसुं अओ वोच्छं ॥६९।
[4]हिट्ठिमे वाससयाइं [5]मज्झिमे सहसाइं उवरिमे लक्खा ।
सखिज्जा विन्नेया [6]जहसंखेणं तु तीसुं पि ॥७०॥
पलिया असंखभागो[7] उक्कोसो[8] होइ विरहकालो उ ।
विजयाइसु निद्दिट्ठो सव्वेसु जहन्नओ समओ ॥७१॥ [बृहत्सङ्ग्रहणी गा. १५०-४]

प्र. आ.
३३१

१ ०य-सि.। ०यं-इति बृहत्सङ्ग्रहीण्यां पाठः ॥ २ संखिज्ज मास-मु.। तुला-बृहत्संग्रहणी ॥ ३ आणयपाणएसुता. सि. ॥ ४ हिट्ठिम-ता. ॥ ५ मज्झिम-मु. । मज्झिमि-ता. । बृहत्सङ्ग्रहण्यामपि मज्झिमे–इति ॥ ६ जहा-सि. ॥ ७ ०गा-मु. ॥ ८ ०सा-सि. वि. ॥

'भवणे' त्यादिगाथाचतुष्कम्, इह भवनपत्यादिषु देवाः प्रायः सततमुत्पद्यन्ते कदाचिदेव त्वन्तरम्, तच्च सामान्येन चतुर्विधेष्वपि समुदितेषु देवेषु द्वादश मुहूर्ताः। तदनन्तरमवश्यमन्यतमस्मिन् कश्चिदेव उत्पद्यते [1]इति। उक्तं च—

● "गब्भयतिरिनरसुरनारयाण विरहो मुहुत्तबारसगं" [ ] इति।

विशेषतस्तु भवनवासिषु व्यन्तरेषु ज्योतिष्केषु सौधर्मे ईशाने च प्रत्येकमुत्कर्षत उपपातविरहकालश्चतुर्विंशतिमुहूर्ताः।

[2]इयमत्र भावना—भवनवास्यादिषु मध्ये प्रत्येकमेकस्मिन् बहुषु वा देवेषूत्पन्नेषु सत्सु अन्य उत्कृष्टमन्तरं चतुर्विंशतिं मुहूर्त्तान् कृत्वा नियमतः समुत्पद्यते इति। जघन्यत उपपातविरहकालः सर्वेष्वपि भवनवासिव्यन्तरज्योतिष्कसौधर्मेशानरूपेषु एकः समयः। किमुक्तं भवति?—एतेषु पञ्चस्वपि स्थानेषु प्रत्येकमेकस्मिन् बहुषु वा समुत्पन्नेष्वन्यः समयमेकमन्तरं कृत्वा समुत्पद्यत इति। [3]शेषः [4]सर्वोऽप्युपपातविरहकालो मध्यमो वेदितव्य इति॥ ६७॥

[5]सनत्कुमारे देवानामुत्कर्षत उपपातविरहकालो नव दिनानि—रात्रिन्दिवानि विंशतिश्च मुहूर्ताः, माहेन्द्रे द्वादश दिनानि दश च मुहूर्ताः; ब्रह्मलोके सार्धानि द्वाविंशतिर्दिनानि; लान्तके पञ्चचत्वारिंशद्दिनानि, महाशुक्रेऽशीतिदिनानि, सहस्रारे दिवसशतम्- अहोरात्रशतम्॥ ६८॥

१ एव-मु.॥ २ आद्वारं-तुला—बृहत्सङ्ग्रहणीवृत्तिः प. ७० त.॥ ३ सनत्कुमारे शेषः—जे. सि. दि.॥
४ सर्वोप्युपपातो वेदितव्य-जे. सि.॥ ५ सनत्कुमारे कल्पेदे० मु.॥
● गर्भजतिर्यङ्नरसुरनारकाणां विरहो मुहूर्त्तानां द्वादशकम्।

आनते प्राणते च प्रत्येकमुत्कर्षत उपपातविरहकालः सङ्ख्येया मासाः । केवलमानतापेक्षया प्राणते प्रभूता वेदितव्याः ते च वर्षादर्वागेव । तथा आरणे अच्युते च प्रत्येकं सङ्ख्येयानि वर्षाणि, नवरमत्राप्यारणापेक्षयाऽच्युते प्रभूतानि, तानि च वर्षशतादर्वागेव, अतः परं ग्रैवेयकेषूत्कर्षत उपपातविरहकालं वक्ष्ये ॥६९॥

प्रतिज्ञातमेवाह 'हिट्ठिमे'त्यादि, त्रिष्वपि [1]अधस्तनादिषु ग्रैवेयकत्रिकेषु [2]यथासङ्ख्येन सङ्ख्येयानि वर्षशतानि वर्षसहस्राणि वर्षलक्षणाणि च विज्ञेयानि, तथाहि अधस्तनग्रैवेयकत्रिके उत्कृष्ट उपपातविरहकालः सङ्ख्येयानि वर्षशतानि, तानि च वर्षसहस्रादारतः । मध्यमग्रैवेयकत्रिके सङ्ख्येयानि वर्षसहस्राणि । तानि च वर्षलक्षादर्वाक् । उपरितनग्रैवेयकत्रिके सङ्ख्येयानि वर्षलक्षाणि । तानि च वर्षकोटया आरतो द्रष्टव्यानि । अन्यथा कोटीग्रहणमेव कुर्यादित्येवं सर्वत्र भावनीयम् । इयं च व्याख्या हरिभद्र—सूरिकृतसङ्ग्रहणीटीकानुसारतः, अन्ये तु सामान्येनैव व्याचक्षत इति ॥७०॥

साम्प्रतमनुत्तरविमानेषु उपपातविरहकालमानमाह—'पलिये'त्यादि, विजयादिषु—विजय-वैजयन्त-जयन्ता-ऽपराजितरूपेषु चतुर्षु विमानेषूत्कृष्ट उपपातविरहकालोऽद्धापल्योपमासङ्ख्येयभागः । तुशब्दस्यानुक्तसमुच्चयार्थत्वात्सर्वार्थसिद्धे पल्योपमस्य सङ्ख्येयो भागः । तथा च प्रज्ञापना—

[3]'सव्वट्ठसिद्धदेवा णं भंते ! केवइकालं विरहिया उववाएणं पन्नत्ता ?, गोयमा ! जहन्नेणं एगं समयं उक्कोसेणं पलिओवमस्स संखेज्जइभाग'' [पद ६/सू. ६०५] मिति ।

१ अधस्तनमध्यमोपरितनग्रैवेयकत्रिकेषु–मु. । अधस्तनासु यथा० खं० वि. ॥ २ यथासङ्ख्य स० खं. । यथासङ्ख्येयानि–सि. ॥ ३ सव्वट्ठसिद्धे-खं. ॥

जघन्यतः पुनः सर्वेष्वपि- सनत्कुमारादिष्वनुत्तरान्तेषु उपपातविरहकाल एकः समय इति ॥७१॥१९९॥

सम्प्रति 'उव्वट्टणाए विरहो' त्ति द्विशततमं द्वारमाह—

**उववायविरहकालो एसो जह वण्णिओ य देवेसु ।**
**उव्वट्टणावि एवं सव्वेसिं होइ विन्नेया ॥७२॥** [बृहत्सङ्ग्रहणी गा. १५५]

'उववाय' गाहा, उपपतनमुपपातः—तदन्यगतिकानां सत्त्वानां देवत्वेनोत्पादः, तस्य विरहकालः—अन्तरकालः, एषः—चतुर्विंशतिमुहूर्तादिक उत्कृष्टो जघन्यतश्च यथा देवेषु [1]प्रागेववर्णितः, एवम्—अनेनैव प्रकारेण सर्वेषां देवानामुद्वर्तनाऽपि विज्ञेया । [2]तद्यथा—भवनवासिव्यन्तरज्योतिष्कसौधर्मेशानदेवानामुत्कृष्ट उद्वर्तनाविरहकालश्चतुर्विंशतिर्मुहूर्ताः । सनत्कुमारे नव दिनानि विंशतिश्च मुहूर्ताः; माहेन्द्रे द्वादश दिनानि दश च मुहूर्ताः; ब्रह्मलोके सार्धा द्वाविंशतिर्दिनाः; लान्तके पञ्चचत्वारिंशद्दिनाः; शुक्रे अशीतिर्दिनाः, सहस्रारे दिनशतम् , आनत-प्राणतयोः सङ्ख्येया मासाः, आरणा-ऽच्युतयोः सङ्ख्येयानि वर्षाणि, अधस्तनेषु त्रिषु ग्रैवेयकेषु सङ्ख्येयानि वर्षशतानि, मध्यमेषु त्रिषु सङ्ख्येयानि वर्षसहस्राणि, उपरितनेषु [3]त्रिषु सङ्ख्येयानि वर्षलक्षाणि, विजयादिषु चतुर्षु पल्योपमासङ्ख्येयभागः, सर्वार्थसिद्धे [4]पुनः पल्योपमसङ्ख्येयभागः । [5]जघन्यः पुनः सर्वेषामप्युद्वर्तनाविरहकाल एकः समय इति ॥७२॥ २००॥

१ प्रागुपव० मु. ॥ २ तुला—बृहत्सङ्ग्रहणीवृत्तिः प. ७१ ॥ ३ त्रिषु- सि. वि. नास्ति ॥ ४ च पुनः पल्यो० मु. ॥
५ जघन्यतः-मु. ॥

इदानीम् 'इमाण संख' त्ति एकोत्तरद्विशततमं द्वारमाह—

एक्को व दो व तिन्नि व संखमसंखा [1]य एगसमएणं ।
उववज्जंतेवइया उव्वट्टंतावि एमेव ॥७३॥ [बृहत्सङ्ग्रहणी गा. १५६]

'एक्को व' गाहा, [2]भवनवास्यादिषु प्रत्येकमेकस्मिन् समये जघन्यतः एको द्वौ वा त्रयो वा उत्पद्यन्ते; उत्कर्षतः सङ्ख्याता असङ्ख्याता वा । केवलं सहस्रारादूर्ध्वं सर्वत्रोत्कर्षतः सङ्ख्याता एव वक्तव्याः नासङ्ख्याताः, यतो [3]मनुष्या एव सहस्रारादूर्ध्वं गच्छन्ति, न तिर्यञ्चो । मनुष्याश्च सङ्ख्याता एव । 'उव्वट्टंतावि एमेव' त्ति उद्वर्तमाना अपि सन्तो भवनपति-व्यन्तरादिभ्य [4]एवमेवोद्वर्तन्ते । [5]तद्यथा—जघन्यत एको द्वौ वा त्रयो वा उत्कर्षतः सङ्ख्याता असङ्ख्याता वा यावत्सहस्रारकल्पः । सहस्रारकल्पादूर्ध्वमुत्कर्षतः सङ्ख्याता एव च्यवन्ते; आनतादिच्युता हि मनुष्येष्वेवागच्छन्ति न तिर्यक्षु, मनुष्याश्च सङ्ख्याता एवेति ॥७३॥२०१॥

इदानीं 'जम्मि एयाण गइ' त्ति द्व्युत्तरद्विशततमं द्वारमाह—

पुढवीआउवणस्सइ [6]गब्भे पज्जत्तसंख[7]जीवीसु ।
सग्गच्चुयाण वासो सेसा पडिसेहिया ठाणा ॥७४॥ [बृहत्सङ्ग्रहणी गा. १८०]

१ उ-ता. । व-इति बृहत्सङ्ग्रहण्याम्॥ २ तुला-बृहत्सङ्ग्रहणीवृत्तिः प. ७१॥ ३ मनुष्याणां- जे. ॥ ४ इत्थमेवो० मु. ॥ ५ ते च ज० मु. । तथा ज० सि. वि. ॥ ६ कप्पे—जे. ॥ ७ जीवेसु—ता. ॥

बायरपज्जत्तेसु सुराण भूदगवणेसु उप्पत्ती ।
ईसाणंताणं चिय तत्थवि न उव्वट्टगाणंपि ॥७५॥
आणयपभिईहिंतो जाणुत्तरवासिणो [1]चविऊणं ।
मणुएसु चिय जायइ नियमा [2]संखेज्जजीविसु ॥७६॥

'पुढवीआउ॰' गाहा, स्वर्गात्–[3]देवोत्पादस्थानाच्च्युतानां सामान्येन भवनपति-व्यन्तर-ज्योतिष्क-वैमानिकानां देवानां वासो–वसनमुत्पत्तिरित्यर्थः, पृथिवीकाये अप्काये वनस्पतिकाये तथा गर्भजेषु पर्याप्तेषु सङ्ख्यातवर्षजीविषु तिर्यग्मनुष्येषु भवति । शेषाणि पुनः स्थानानि–तेजस्कायवायुकायद्वित्रिचतुरिन्द्रियासङ्ख्यातायुष्कसम्मूर्छिमापर्याप्ततिर्यग्नरदेवनारकरूपाणि प्रतिषिद्धानि तीर्थकरगणधरैः ॥७४॥

अत्रैव विशेषमाह—'बायरे' त्यादिगाथाद्वयम्, पृथिव्युदकप्रत्येकवनस्पतिष्वपि बादरपर्याप्तेष्वेव सुराणां–देवानामुत्पत्तिः; न पुनः सूक्ष्मपृथिव्यप्कायिकेषु साधारणवनस्पतिषु अपर्याप्तेषु बादरपृथिव्यप्प्रत्येकवनस्पतिष्वेवेति । तत्रापीशानान्तानामेव [4]देवानामेकेन्द्रियेषूत्पत्तिः; न तूर्द्ध्वगानां सनत्कुमारादीनाम्, ते हि पञ्चेन्द्रियतिर्यङ्मनुष्येष्वेवोत्पद्यन्ते ॥७५॥

तथा आनतप्रभृतिभ्यः–आनतकल्पदेवानारभ्य यावदनुत्तरवासिनो देवाः स्वस्थानाच्च्युत्वा नियमतः सङ्ख्यातवर्षायुष्केषु मनुष्येष्वेव जायन्ते । नैकेन्द्रियेषु नापि तिर्यक्ष्विति भावः ॥७६॥२०२॥

---

१ चवेऊणं–मु॰ ॥ २ संखिज्ज॰ मु॰ ॥ ३ तुला–बृहत्सङ्ग्रहणीवृत्तिः प॰ ७७A ॥
४ देवानामेकेन्द्रियगणे उत्पत्तिः–सि॰ वि॰ ॥

इदानीं 'जत्तो आगई एसिं' ति त्र्युत्तरद्विशततमं द्वारमाह—

परिणामविसुद्धीए देवियकम्मबंधजोगाए ।
पचिंदिया उ गच्छे नरतिरिया सेसपडिसेहो ॥७७॥
आईसाणा कप्पा उववाओ होइ देवदेवीणं ।
तत्तो परं तु नियमा देवीणं नत्थि उववाओ ॥७८॥ [ बृहत्सङ्ग्रहणी गा. १५७, १८४]

'परिणाम०' गाहा, [1]परिणमनं परिणामो—मानसिको व्यापारविशेषः । स च द्विधा— विशुद्धोऽविशुद्धश्च । तत्र यो विशुद्धः स देवगतिकारणमिति तत्प्रतिपादनार्थं विशुद्धिग्रहणम् , परिणामस्य विशुद्धिः परिणामविशुद्धिः, तया , प्रशस्तेन मानसव्यापारेणेत्यर्थः । एतेन शुभाशुभगत्यवाप्तौ मनोव्यापारस्यैव प्राधान्यमाह । सापि च परिणामविशुद्धिः काऽप्युत्कर्षं प्राप्ता मुक्तिपदस्यैव प्रापिका । अतस्तन्निवृत्त्यर्थमाह—देवायुःकर्मबन्धनयोग्यया हेतुभूतया, पञ्चेन्द्रियाः, तुशब्द एवकारार्थः, पञ्चेन्द्रिया एव नैकेन्द्रियद्वीन्द्रियादय इत्यर्थः, नरा—मनुष्यास्तिर्यञ्चश्च देवेषु मध्ये गच्छन्ति । शेषाणां तु सुरनारकाणां देवगतिगमने प्रतिषेधो ज्ञातव्यः । न खलु देवा नारका वा स्वायुःक्षयेऽनन्तरं देवत्वेनोत्पद्यन्त इति ॥ ७७ ॥

सम्प्रति प्रसंगतो देवदेवीनामुत्पत्तिस्थानमाह—'आईसाणे' त्यादि, आ [2]ईशानात्—ईशानकल्पमभिव्याप्य । किमुक्तं भवति ?—भवनपतिव्यन्तरज्योतिष्कसौधर्मेशानदेवेषु देवानां देवीनां चोपपातो—जन्म भवति । ततः—ईशानात्परमूर्द्ध्वं सनत्कुमारादिषु देवीनामुपपातो नास्ति किन्तु देवानामेव केवलानाम् ।

१ तुला—बृहत्सं. वृत्तिः प. ७१ तः ॥ २ तुला बृहत्संग्रहणीवृत्तिः प. ७८ ॥

